ॐ

# श्रीविष्णुसहस्रनामोल्लासः

काश्मीरस्थश्रीनगरान्तर्गत

गणेशघाट्टवास्तव्येन

श्रीनाथरामशास्त्रिणा

संपादितः

शिवभक्तानुचरेण राजानक-

लक्ष्मणेन प्रकाशितः

श्रीनगर, सं० विक्र० २०१९

काश्मीर। सं० ई० १९६२

ॐ

# श्रीविष्णुसहस्रनामोल्लासः

काश्मीरस्थश्रीनगरान्तर्गत

गणेशघाट्टवास्तव्येन

श्रीनाथरामशास्त्रिणा

संपादितः

शिवभक्तानुचरेण राजानक-

लक्ष्मणेन प्रकाशितः

श्रीनगर,
काश्मीर।

सं० विक्र० २०१९
सं० ई० १९६२

ओं

हरिः ओं तत् सत्

ओं श्रीगणेशाय नमो नमः

## प्रस्तावना

अङ्गानि वेदाश्चत्वारो
मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च
विद्या एताश्चतुर्दश ॥

इति स्मार्तवचनेनैताश्चतुर्दश विद्या एवाशेषव्यवहारज्ञानजनिका दुश्च्छेद्याज्ञानतिमिरनिवृत्तिपूर्वकं परज्ञानप्रकाशिकाश्च अपरात्वेन परात्वेन च कथ्यन्ते ज्ञानकौशलकलाकोविदैरागमतत्त्वज्ञैः । तदेतदन्तर्गतं पुराणजातमपि सुहृत्तमवाक्यवदखिलव्यवहारोपदेष्टृत्वेन सर्वाभीष्टसाधकं, मिथ्याज्ञानतमोपहारकत्वेन च परतत्त्वज्ञानप्रदायित्वाज्जननमरणरूपसंसरणापहारकं च, सर्वथा वैदुष्यविभूषितान्तःकरणैर्विद्वद्वर्यैः समालोच्यते ।

पुराणं मानवो धर्मः
साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि
न हन्तव्यानि हेतुभिः ॥

इत्याद्यभियुक्तोक्त्या च चतुर्षु मूर्धन्यभूतस्य पुराणस्यास्याज्ञासिद्धत्वकथनेनैव महामहिमत्वमखिलोपादेयत्वं च द्योत्यते । भारतेति-

हासस्य तत्सभ्यतायास्तद्विद्या वैभवादेश्चैतदेव परमयनम् । सर्व-जनतात्रिविधोन्नतेश्च परमुपायप्रदर्शनम् ।

इतिहासपुराणाभ्यां
वेदं समुपबृंहयेत् ।

इति शिष्टोक्तेश्च सूत्रभूतवेदांशानां भाष्यरूपाण्येतान्येव पुराणानि भगवता श्रीकृष्णद्वैपायनेन मन्दबुद्धिषु कारुण्यकारिणा संहितात्वेन विरचितानि गूढवेदार्थावगतये निःसंशयं सर्वसम्मानास्पदं प्राप्तानि सन्ति। पुराणान्तर्गतोऽयमितिहासवर्गः पञ्चमो वेदानां वेद इति शिष्टाचारतश्च नैतानि पुराणानि वेदानूनतां जहति । अस्ति चैषां तत्त्वतो ब्रह्मणः सर्गादावाविर्भाव एव, अनन्तरं चर्षिद्वारा संहितारूपत्वम् । विशिष्टतया चैतान्येव सर्वेषु वर्णेष्वखिलेष्वाश्रमिषु सर्वदेशस्थेषु नरनारीसङ्घेषु समदृष्टचा प्रेमप्रतिष्ठामाप्नुवन्ति । तानि चैतानि पुराणानि 'ब्राह्मं पाद्मं वैष्णवं चेत्याद्युक्तक्रमेणाष्टादशसंख्याकानि वैशेष्यात् सृष्टि-तात्पर्याणि सन्ति । पुराणद्वारैव शेषशायिनो भगवतो नारायणस्य विश्वसर्जनेच्छायां नाभिपद्माद्ब्रह्मणश्चतुर्मुखस्य प्रादुर्भावो लक्ष्मी-द्वारा चरणकमलसंवहनं नारदोपस्थित्यादि च चित्रेऽद्यापि चित्र-कारैर्दर्श्यते । ब्राह्मपुराणे च चराचरात्मकदृश्यजगदुत्पत्तिः कथ्यते । पाद्मं पुराणं च ब्रह्माविर्भावस्थानस्य पद्मस्य निरूपणादि परम् । एवमन्येषामपि पुराणानां नामानुरूपेतिहासवर्णनम् । तत्रास्मिन्नति-शयमाहात्म्यमहिते चतुर्वर्गसाधनभूते सर्वोन्नतिकारिणि पाद्मे पुराणे-ऽन्तर्भूतं श्रीभगवतो वासुदेवस्य नारायणस्य नामसहस्रं सर्वार्थसाधनं सर्वातिशयमानास्पदमशेषभगवद्भक्तापचिति भाजनं प्रायोऽखिलानां भक्तिभावभावितान्तःकरणानां सनातनधर्मानुरक्तस्वान्तानां काश्मी-रिकाणां यज्ञेषु पाठेषु च लब्धप्रतिष्ठं विराजते सुतराम् । एतस्मिंश्च नामसहस्रे वासुदेव इत्यादीनि कानिचिन्नामानि निर्गुणसगुणब्रह्मप्रति-पादकानि, नारायणो मुञ्जकेश—इत्यादीनि कानिचित्पृथग्देवतावि-षयाणि, कानिचिद् आत्मा तत्त्वाधिप—इत्यादीनि विभूतिविषयाणि सन्ति ।

एवं त्रिभिः स्तोमैर्भगवता श्रीमहादेवेन जगदुद्दिधीर्षया विष्णोर्नामसहस्रकमुपदिष्टं वरीवर्ति । तदेतद्विदितार्थसङ्गतीनां फलातिशयाय भक्तिप्राचुर्याय च भवत्वित्याशया—मया भगवच्चरणारविन्दानुरागमुखरीकृतेन केवलं जन्मजन्मार्जिताघौघापहृत्यै प्रतिनामानुष्टुभनच्छन्दसैकैकः श्लोको रचितोऽस्ति । तस्यैतस्य प्रायः श्लोकसहस्रस्य कारुण्यपूर्णदृष्टिदानपूर्वकं स्वीकारेण मां कृतार्थयन्तु सन्तो महाशया विद्वद्वर्या इत्यभ्यर्थयेऽहमशेषकोविदवशंवदः काश्मीरस्थश्रीनगरान्तर्गतगणेशघाट्टवास्तव्यः कल्लेत्युपाह्वो नाथरामशास्त्री ।

श्रीनगर
काश्मीर

---

# समर्पणम्

१. समर्प्यते च सैषा भगवच्चरणारबिन्दभक्तिस्फारकारिणी श्रीविष्णुसहस्रनामस्तुतिः स्वच्छन्दनाथभक्तपराध्र्येभ्यो बाल्यादेवा-स्खलितब्रह्मचर्यानन्दचमत्कारचमत्कृतेभ्यः परशिवसमावेशा-मोदपूर्णान्तःकरणेभ्यः शास्त्रप्रेमातिशयहृष्टचित्तेभ्यः श्रीमद्भ्यो ब्रह्मचारिवर्येभ्यो राजानकश्रीलक्ष्मणमहात्मभ्यो मुद्रापयितुं प्रचारयितुं चेति ॥

तत्रभवतः प्रचारयितृंश्चैतान् श्रीभगवान् स्वच्छन्दनाथः पारमार्थिकानन्द समर्पणेन कृतार्थयतु ॥

---

२. अत्र भगवद्भक्तिकारिणि शुभकर्मणि सहायकर्त्ता तन्त्र-तारकमुख्यः श्रीमान् पण्डित श्यामलाल शास्त्रिवर्योपि धन्यवादार्हः ।

ओं

अथ

# श्रीविष्णुसहस्रनामोल्लासः

——:०:——

## ओं नमो भगवते वासुदेवाय
## ओं श्रीगणेशाय नमः

ओं वासुदेवः परंब्रह्म परमात्मा परात्परः ।
परंधाम परंज्योतिः परंतत्त्वं परंपदम् ॥ १ ॥

ओं सर्वं वसति यस्मिन्यः सर्वस्मिन्वसतीश्वरः ।
स्वप्रकाशः स विश्वात्मा वासुदेवोऽस्तु मे श्रिये ॥ १ ॥

ब्रह्मरुद्रपराकाशदिग्भ्योऽपि यद्‌भूत्तमम् ।
परात्परं परंब्रह्म दिश्यान्मे महतीं मतिम् ॥ २ ॥

अनन्तकोटिब्रह्माण्डचराचरजगत्स्थितिः ।
परमात्मा स जीवात्माधारो मे भासतां हृदि ॥ ३ ॥

निःशेषात्तत्त्वसंघाताद्‌ब्रह्मादिभ्योऽपि यः परः ।
शरणं शरणानां च स मे परात्परो गतिः ॥ ४ ॥

चन्द्रभास्करवह्न्यादिधाम्नां निधिमनुत्तमम् ।
परं धाम प्रपद्येऽहं हार्दान्ध्यं तद्द्यतान्मम ॥ ५ ॥

तडिद्रवीन्दुशिख्यादिज्योतिषां ज्योतिरुत्तमम् ।
आविरास्तां परंज्योतिस्तन्मे स्वान्ततमोपहृत् ॥ ६ ॥

सर्वतत्त्वाश्रयं सर्वतत्त्वात्मकमतत्त्वकम् ।
प्रकृतेः परमव्यक्तं परं तत्त्वं प्रणौम्यहम् ॥ ७ ॥

धातृरुद्रेन्द्रादिदिव्यशक्तिशालि सुरोत्तमैः ।
सदा यन्मृग्यतेऽहं तदाश्रयेय परं पदम् ॥ ८ ॥

परः शिवः परो ध्येयः परं ज्ञानं परागतिः ।
परमार्थः परं श्रेयः परानन्दः परोदयः ॥ २ ॥

सर्वाशिवार्शानं सर्वशिवाश्रयं शिवास्पदम् ।
परं शिवं प्रपद्येऽहं शिवस्यापि शिवत्वदम् ॥ ९ ॥

शिवो यद्ध्यानजीवातुजीवितो गीर्णवान्विषम् ।
श्लाघ्यः किं न परोध्येयः स प्रभुर्ध्यातृमंगलम् ॥ १० ॥

यत्ज्ञानं घोरसंसारसागरोत्तरणे प्लवः ।
दिश्यान्मे तत्परं ज्ञानं भवमुक्ति सनातनीम् ॥ ११ ॥

यमेवेन्द्रादयो देवा गतिहीना गतिं विदुः ।
दैत्यदानवभीत्यार्तास्तं स्तवीमि परागतिम् ॥ १२ ॥

सिद्धयोऽष्टावपीशस्य श्रीपतेः सत्स्वरूपिणः ।
दास्यो लालाटिकास्तस्मै परमार्थाय ते नमः ॥ १३ ॥

धूर्जटिरपि सन्त्यज्य प्रेयः श्रेयस उद्यतः ।
यस्मै, मह्यं परं श्रेयस्तद्दिश्याच्छ्रेय उत्तमम् ॥ १४ ॥

यस्यानन्दस्य सर्वेऽन्ये मात्रां जीवन्ति तत्त्वतः ।
प्रकटीभवतान्मे स परानन्दस्त्वमेव हि ॥ १५ ॥

सुधांशुसूर्यतारादिज्योतिषामुदयोऽनिशम् ।
यदधीनः, सदा सोऽस्तु मोहघ्नो मे परोदयः ॥ १६ ॥

परोऽव्यक्तात्परं व्योम परर्द्धिः परमेश्वरः ।
निरामयो निर्विकारो निर्विकल्पो निराश्रयः ॥ ३ ॥

प्राणेन्द्रियमनोबुद्धिप्रभृतेर्यः परो मतः ।
अव्यक्तस्तत्परो योऽस्ति नमोऽव्यक्तात्पराय ते ॥ १७ ॥

मठाकाशमहाकाशदहराकाशतोऽपि यत् ।
निर्मलं तत्परं व्योम तस्मै तेऽस्तु नमो नमः ॥ १८ ॥

ऋद्धिमुच्चैस्तमां सद्यो लभन्ते वासवादयः ।
यत्प्रसादात्परर्द्धिः स्तात्परमर्द्धिप्रदो हरिः ॥ १९ ॥

ऐश्वर्यपूर्ण ऐश्वर्यप्रदश्च परमेश्वरः ।
स स्थितीशो ददात्विष्टमीश्वराणामपीश्वरः ॥ २० ॥

दुस्तरश्च दुरन्तश्च दुष्प्रधर्षो भवामयः ।
तस्मान्मोचय मानाथं चिन्मयस्त्वं निरामयः ॥ २१ ॥

जन्मादिनामरूपादिविकारेभ्योऽसि माधव ।
निष्क्रान्तो निर्विकारस्त्वं जन्मादिविकृतिं हर ॥ २२ ॥

योगीशो योगिराड्वर्यैर्निर्विकल्पसमाधिना ।
ध्यायसे निर्विकल्पस्त्वं निर्विकल्पं मनः क्रियाः ॥ २३ ॥

सर्वाश्रयोऽपि स्वे धाम्नि स्थित्या स्वयमनाश्रयः ।
निराश्रय स्वपादाब्जस्थितिं वितर मे प्रभो ॥ २४ ॥

निरञ्जनो निरालम्बो निर्लेपो निरवग्रहः ।
निर्गुणो निष्कलोऽनन्तोऽभयोऽचिन्त्योऽचलोऽच्युतः ॥ ४ ॥

त्वन्माययाज्यते लोको मायेशातश्च रज्यते ।
विषयेषु, त्वमेवैको निरञ्जन इहोच्यसे ॥ २५ ॥

खादीनामप्यशेषाणां तदन्तश्चारिणां तथा ।
आश्रयोऽपि निरालम्बो निरालम्बं श्रयस्व माम् ॥ २६ ॥

सर्वाधारोऽखिलश्लिष्टोऽप्यसक्तत्वादनारतम् ।
निर्लेपः पावनाद्ध्रयस्त्वं पङ्कलिप्तं पुनीहि माम् ॥ २७ ॥

यमवायुरवीन्द्वग्निप्रभृतीनां यतो भयम् ।
अभयो दयया पायाद्भीतं मां निरवग्रहः ॥ २८ ॥

ब्रह्मादींस्त्रिगुणान्देवान्योजयन्स्वस्वकर्मसु ।
मायेशो निर्गुणो मायाबन्धं हरतु मे हरिः ॥ २९ ॥

हरोऽपि यत्कलारक्तः कलानिधिकलाधरः ।
अणुवद्योऽकलः सोऽयं निष्कलो मां सदावतु ॥ ३० ॥

शेषपर्यङ्कशायी मामनन्तो विश्वभारधृत् ।
दिक्कालाद्यनवच्छिन्नो मोचयत्वेनसोऽमितात् ॥ ३१ ॥

यमानिलेन्द्रसूर्याग्न्यादयोऽपि यद्भयात्सदा ।
स्वकर्मसु प्रवर्तन्तेऽभयो मां रक्षताद्भयात् ॥ ३२ ॥

अमेयशक्तिमहिमा शिवेनापि न शक्यते ।
ज्ञातुं चिन्तयितुं वा यः सोऽचिन्त्यो मेऽस्तु चित्तगः ॥ ३३ ॥

त्वदिच्छया प्रभो स्थैर्यं भजन्ते भाचलाचलाः ।
विश्वस्थितिधरो धीरोऽचलोऽस्त्वचलभक्तिदः ॥ ३४ ॥

नित्यः सदैकरूपः सन् च्यवते न स्वरूपतः ।
योऽच्युतः स च्युतस्यास्तूद्धर्ता मेऽपि भवाम्बुधौ ॥ ३५ ॥

अतीन्द्रियोऽमितोऽपारोऽनीशोऽनीहोऽव्ययोऽक्षयः ।
सर्वज्ञः सर्वगः सर्वः सर्वदः सर्वभावनः ॥ ५ ॥

यं न लब्धुं हृषीकाणां कार्योत्पादनचातुरी ।
दृश्यते त्वग्र्यया बुद्ध्या सोऽतीन्द्रियोऽस्तु धीचरः ॥ ३६ ॥

यः शक्त्या व्याप्तलोकालिस्त्रिविक्रमस्वरूपधृत् ।
अमितोऽमितकारुण्यात्सारूप्यं मे प्रयच्छतु ॥ ३७ ॥

वानरो यत्कृपापात्रं तीर्णाब्धिरभवत्क्षणात् ।
सोऽपारस्तारयत्वेवं मामपाराद्भवाम्बुधेः ॥ ३८ ॥

ब्रह्मणोऽपि पितेशस्य प्रभुरस्ति य आत्मभूः ।
यमादेश्च नियन्ता, तदीशोऽनीशस्य कः परः ॥ ३९ ॥

कर्मेन्द्रियैर्धीन्द्रियैर्वा विनेच्छामात्रतः प्रभुः ।
अनीहः सर्वसंसारचक्रस्य कार्यवाहकः ॥ ४० ॥

ध्रुवस्य चिन्मयस्यापि व्ययोनास्ति कदाचन ।
विकारादेरभावत्वात्त्वत्तोऽन्यः कोऽव्ययोऽच्युत ॥ ४१ ॥

महाप्रलयकालेऽपि क्षयो यस्य न विद्यते ।
सोऽवतात्सर्वदा विष्णुरक्षयो मृत्युसंकटान् ॥ ४२ ॥

भूतभाविभवज्ज्ञानकोविदो ज्ञानिनां प्रभुः ।
सार्वज्ञ्यदोऽस्तु सर्वज्ञः सर्वधीवृत्तिचोदकः ॥ ४३ ॥

विश्वव्याप्यखिलाधारः सर्वप्राणिहृदिस्थितः ।
सर्वगः सर्वदा भूयान्मम लोचनगोचरः ॥ ४४ ॥

सृजत्यवति सर्वं यः सर्वात्मा सर्वरूपधृत् ।
सर्वव्यापी स सर्वोऽयं प्रीयतां सन्मयो हरिः ॥ ४५ ॥

नार्थः कश्चिदलभ्योऽत्र भक्तैः प्रियहिते रतः ।
सर्वदः सेव्यते यत्र श्रीधरः श्रीश ईश्वरः ॥ ४६ ॥

सर्वसत्ताप्रदः सर्वं वर्धयन् लीलया स्वया ।
रम्येणास्तु स्वरूपेण प्रकटः सर्वभावनः ॥ ४७ ॥

सर्वशास्ता सर्वसाक्षी पूज्यः सर्वस्य सर्वदृक् ।
सर्वशक्तिः सर्वसारः सर्वात्मा सर्वतोमुखः ॥ ६ ॥

कालानिलेन्दुसूर्यादेरपि शास्ता भयावहः ।
दुष्टदानवदैत्यानां सर्वशास्तास्तु मे गतिः ॥ ४८ ॥

धर्माधर्मादिसाक्षी यो विभुः सर्वहृदिस्थितः ।
अन्तर्यामी सर्वसाक्षी प्रत्यक्षोऽस्तु सदा मम ॥ ४९ ॥

ब्रह्मेन्द्ररुद्रपूजापि विहिता पूजकैश्च या ।
तयापि पूज्यते पूज्यः सर्वस्यैषोऽमरेश्वरः ॥ ५० ॥

स्वप्रकाशः प्रकाशात्मा सूर्यचन्द्राग्निभासकः ।
सर्वदृक् यः कृपादृष्टया सोऽस्तु मे दृष्टिगोचरः ॥ ५१ ॥

शक्तिचक्रस्फूर्तिरेषाशेषायत्तैव चक्रिणः ।
यस्य स सर्वशक्तिर्मे मुक्त्या युक्तिं प्रयच्छतात् ॥ ५२ ॥

देवासुरमनुष्येषु सर्वेषूत्कर्षशालिषु ।
सारोत्कर्षः प्रभोरेव सर्वसारोऽस्तु सारदः ॥ ५३ ॥

चराचरस्य जगतोऽप्यात्मसत्ताप्रदो विभुः ।
सर्वात्मा सर्वदा मेऽस्तु सर्वसौहार्ददो हरिः ॥ ५४ ॥

सर्वतोमुख आनन्दमयः सच्चिन्मयोऽस्यतः ।
मामपीशानगृहाण सर्वत्रार्तिविनाशनात् ॥ ५५ ॥

सर्वावासः सर्वरूपः सर्वादिः सर्वदुःखहा ।
सर्वार्थः सर्वतोभद्रः सर्वकारणकारणम् ॥ ७ ॥

सर्वाधेयाधारभूतः सर्वस्यावासदायकः ।
सर्वत्र च वसन्यः स सर्वावासः प्रसीदतु ॥ ५६ ॥

अनामरूपोऽपि विभुर्विराड्रूपो जगन्मयः ।
विश्वरूपं सर्वरूपः प्रकटीकुरुतान्मम ॥ ५७ ॥

स्रष्टुः पिता त्रिजगतां सृष्टिस्थित्यन्तकृत्सदा ।
सर्वादिस्तैः षड्विकारैस्त्यक्तं मां सर्वदा क्रियात् ॥ ५८ ॥

दुस्तरापारसंसारघोरदुःखातुरस्य मे ।
भूयाद्धरिस्ततो दुःखादुद्धर्ता सर्वदुःखहा ॥ ५९ ॥

तत्तत्सर्वं वस्तुजातं त्रिलोक्यन्तर्गतं विभोः ।
स्वरूपममृताख्यं मे सर्वार्थो दिशताद्धरिः ॥ ६० ॥

सर्वैः प्रकारैः रूपैश्च सर्वैः समन्ततोऽखिलान् ।
अनुगृह्णन्स्वकानस्तु सर्वतोभद्र ईश्वरः ॥ ६१ ॥

सर्गस्थित्यन्तहेतूनामपि हेतुः परात्परः ।
भूयान्मे कारणं मुक्तेः सर्वकारणकारणम् ॥ ६२ ॥

सर्वातिशायकः सर्वाध्यक्षः सर्वेश्वरेश्वरः ।
षड्विंशको महाविष्णुर्महागुह्यो *महाहविः ॥ ८ ॥

योऽतिशेतेऽपि सर्वेभ्यो देवेशेभ्योऽखिलोत्तमः ।
सर्वसंपत्समृद्धं मां सर्वातिशायकः क्रियात् ॥ ६३ ॥

*महाविभुरित्यपि पाठः ।

सर्वं प्रत्यक्षं यस्यान्तर्यामिणः सर्वसाक्षिणः ।
त्रिकालदर्शी भूयान्मे सर्वाध्यक्षोऽक्षिगोचरः ॥ ६४ ॥

त्रिजगत्कारणाद्र्याणामीश्वराणां महेश्वरः ।
सर्वैश्वर्यपरं मे स दिश्यात्सर्वेश्वरेश्वरः ॥ ६५ ॥

क्षित्यादिपुरुषान्तानि तत्त्वानि पञ्चविंशतिः ।
षड्विंशकस्तद्व्यतीतो भासतां मे हृदीश्वरः ॥ ६६ ॥

महाकाशान्महाकालादात्मनश्च दिगादितः ।
महत्तमो महाविष्णुर्व्यापकः प्रीयतां मम ॥ ६७ ॥

स्वमायया गूहितः सन्प्रकृतेः परतोऽपि यः ।
ब्रह्मेशाद्यनध्यक्षोऽयं महागुह्योऽस्तु मेऽग्रतः ॥ ६८ ॥

महाप्रलयकालाग्निपक्वं विश्वात्मकं हविः ।
अविद्यालक्षणं वैतद्गृह्णासि त्वं महाहविः ॥ ६९ ॥

नित्योदितो नित्ययुक्तो नित्यानन्दः सनातनः ।
मायापतिर्योगपतिः कैवल्यपतिरात्मभूः ॥ ९ ॥

सूर्यचन्द्रग्रहादीनामुदयोऽस्तेन संगतः ।
नित्योदितस्त्वमेवैकस्तेषां तदुभयावहः ॥ ७० ॥

स्वात्मारामो नित्ययुक्तो योगीशो योगयोजकः ।
ब्रह्मरन्ध्रगलत्सौधपूरानन्दितयोगिराट् ॥ ७१ ॥

यस्यानन्दस्यांशलवैर्विश्वं हृष्यति तुष्यति ।
तेनानन्देन युक्तो मे नित्यानन्दोऽस्तु नन्दकः ॥ ७२ ॥

सदैकरूपोऽजोऽनन्तो ध्रुवो नित्यो निरामयः ।
जनिं मृतिं जरादीन्मे व्यपोहतु सनातनः ॥ ७३ ॥

त्रिभिर्गुणैरिव गुणैस्त्रिगुणैः पाशितो दृढम् ।
माययाहं प्रभुर्मायापतिर्मोचयताद्द्रुतम् ॥ ७४ ॥

न तावद्योगिनां योगसिद्धिः संजायते परा ।
यावन्न तोष्यते योगपतिः सिद्धिप्रदो हरिः ॥ ७५ ॥

आद्यावन्ते हरेरेव श्रुतिष्वेकत्वमीड्यते ।
तत्कैवल्यपतिर्मह्यं कैवल्यं दिशताद्ध्रुवम् ॥ ७६ ॥

विश्ववैचित्र्यकर्ता योऽखिललोकपितामहः ।
तत्त्वान्यपि च सृज्यन्ते येनैव नात्मभूः स किम् ॥ ७७ ॥

जन्ममृत्युजरातीतः कालातीतो भवातिगः ।
पूर्णः सत्यः शुद्धबुद्धस्वरूपो नित्यचिन्मयः ॥ १० ॥

जन्ममृत्युजरादीन्योऽतिक्रम्यात्ममदोन्मदः ।
जन्ममृत्युजरातीतः स मे जन्माद्यपोहतात् ॥ ७८ ॥

त्रिकालदर्शी कालात्मा कालमृत्युहरो हरिः ।
कालातीतः कालकक्ष्योल्लङ्घी कालभयं हतात् ॥ ७९ ॥

संसारदुःखदावाग्निसंवर्तकालिको घनः ।
भवातीतो भवभयं ह्रियान्मे स भवातिगः ॥ ८० ॥

भक्ताशापूरकः पूर्णः पूर्णात्मा विश्वपूरणः ।
अपूर्णपूर्तिकृत्सोऽयं दिश्यान्मे पूर्णतां प्रभुः ॥ ८१ ॥

सत्स्वरूपः सदा योऽसौ सत्यः सत्यात्मकः शिवः ।
सत्यप्रवृत्तिकर्तृणामस्तु मे सत्यवर्धकः ॥ ८२ ॥

नित्यपूतं पावनं च नित्यज्ञानात्मकं प्रभोः ।
रूपं स मे शुद्धबुद्धस्वरूपोऽस्तु सदा हृदि ॥ ८३ ॥

ज्ञानिनां ज्ञानदो ज्ञानस्वरूपो नित्यचिन्मयः ।
चेत्यचेतृचितां भेदात्प्रभिन्न इव लक्ष्यते ।। ८४ ।।

योगिप्रियो योगमायो भवबन्धैकमोचकः ।
पुराणपुरुषः प्रत्यक्चैतन्यः पुरुषोत्तमः ।। ११ ।।

त्वं युक्तैर्योगिभिर्ध्येयो वरेण्यो ध्यातृमंगलम् ।
प्रेष्ठास्ते तेऽप्यलं स्वामिन्योगिप्रिय नमोऽस्तु ते ।। ८५ ।।

योगेन मायावैचित्र्यं दर्शयन्योगिनां सदा ।
चित्ताह्लादधरं *योगमायं तं प्रणमाम्यहम् ।। ८६ ।।

भव एव भवत्क्लृप्तो बन्धोऽस्त्यपारदुःखदः ।
तस्मान्मोचय माऽनाथं भवबन्धैकमोचक ।। ८७ ।।

नित्योऽद्वयः सर्ववपुष्पुरि शेते सनातनः ।
पुराणपुरुषः सोऽस्तु लालयन्पालयंश्च माम् ।। ८८ ।।

प्रतिप्राणि प्रतिवस्तु वसंश्चिन्मय एव यः ।
प्रत्यक्षोऽस्तु विभुः प्रत्यक्चैतन्यो मुक्तिभुक्तिदः ।। ८९ ।।

क्षराक्षराभ्यां योऽतीतः सोऽस्तु मे पुरुषोत्तमः ।
दीनस्य दुःखितस्याशु संसृत्यम्भोधितारकः ।। ९० ।।

वेदान्तवेद्यो दुर्ज्ञेयस्तापत्रयविवर्जितः ।
ब्रह्मविद्याश्रयोऽनर्घ्यः स्वप्रकाशः *स्वयंप्रभुः ।। १२ ।।

यस्य निःश्वसितं वेदास्तैरेवावेद्यते च यः ।
वेदान्तवेद्यो वेदान्तविज्ञानं मे प्रयच्छतात् ।। ९१ ।।

---
*८६ योगिमायो, इति पाठान्तरम्
स्वयं-प्रभ :- इति च पाठः पुस्तकान्तरे ।

यो मायया मूढधियो ब्रह्मादेरप्यगोचरः ।
दुर्ज्ञेयस्यापि तस्याङ्घ्रियुग्मज्ञानं सदास्तु मे ।। ९२ ।।

यदङ्घ्रिकमलध्यानात्तापा आध्यात्मिकादयः ।
नश्यन्ति तापहृन्मेऽस्तु तापत्रयविवर्जितः ।। ९३ ।।

आधारोऽखिलविद्यानामपि योऽमलबुद्धिभिः ।
मृग्यते परयैवास्तु ब्रह्मविद्याश्रयः श्रियै ।। ९४ ।।

यद्भक्तिरक्तचित्तस्य नान्यः पूज्यश्च नो वरः ।
त्रैलोक्यराज्येऽपि रतिर्नास्त्यनर्घ्यः स तुष्यतु ।। ९५ ।।

परापेक्षप्रकाशा हि सूर्येन्द्वग्निग्रहादयः ।
स्वप्रकाशो हरिरेको भूयान्मे गाढमोहहृत् ।। ९६ ।।

परिच्छिन्नप्रभुत्वाभिमानिनो वासवादयः ।
स्वयंप्रभुर्य एकोऽस्ति स दिश्यान्मेऽपि सद्गतिम् ।। ९७ ।।

सूर्यादयोऽपि त्वद्भासा भासिताः परमप्रभ ।
स्वयं प्रभस्त्वमेकोऽसि मन्मोहान्ध्यमपाकुरु ।।९७ ।। (ख)

सर्वोपेय उदासीनः प्रणवः सर्वतः समः ।
सर्वानवद्यो दुष्प्राप्यस्तुरीयस्तमसः परः ।। १३ ।।

परविद्याच्छामृताब्धिनिष्णातबुद्धयो बुधाः ।
उपयान्ति वरेण्यं यं सर्वोपेयमुपैमि तम् ।। ९८ ।।

उदासीनोऽपि सापेक्षो भक्तमुक्त्यपवर्जने ।
समोऽप्यसंगो मह्यं स दिश्यान्निर्वाणमीश्वरः ।। ९९ ।।

त्रयीसारो योगिमृग्यः प्रतीको ब्रह्मणः । परः
प्रणूयते ज्ञातसारैः प्रणवो मेऽस्तु मुक्तिदः ।। १०० ।।

द्वितीयशतम्

महत्यल्पेऽपि सर्वत्र प्राणिवर्गे जडेऽपि वा ।
साम्येन तिष्ठस्यन्तस्त्वं सर्वतःसम ते नमः ॥ १०१ ॥

निरञ्जनो दोषलवैरप्यलिप्तोऽतिपावनः ।
सर्वत्र सर्वदासि त्वं सर्वानवद्य ते नमः ॥ १०२ ॥

दूरे यः श्रुतिगीर्भ्योऽपि योगिनामपि दुर्लभः ।
ब्रह्माद्यैरप्यगम्यः स दुष्प्रापः सुलभोऽस्तु मे ॥ १०३ ॥

परं धाम तुरीयं यत्तीर्णं विकृतितोऽमलम् ।
ध्येयाढ्यं ब्रह्मणो रूपं तं स्तौमि प्रणवास्पदम् ॥ १०४ ॥

परस्तात्प्रकृतेर्घोरमोहतामिस्रनाशकृत् ।
तमसः पर आस्तां मे पुरस्ताद्भास्करप्रभः ॥ १०५ ॥

कूटस्थः सर्वसंश्लिष्टो वाङ्मनोगोचरातिगः ।
संकर्षणः सर्वहरः कालः सर्वभयङ्करः ॥ १४ ॥

तैस्तैर्विकारैरस्पृष्टः प्रकृतेर्विमलः खवत् ।
कूटस्थोऽसंगः सर्वान्मे विकारान्हरताद्धरिः ॥ १०६ ॥

आधारस्त्रिविधः सर्ववैयाकरणसंमतः ।
त्वमेवासि स सर्वस्य सर्वसंश्लिष्ट ईश्वरः ॥ १०७ ॥

आम्नायवचसां योगिमनसामप्यगोचरः ।
स्तुतो मयावधेह्यत्र वाङ्मनोगोचरातिगः ॥ १०८ ॥

विश्वाघौघस्य संहर्त्रे विश्वप्रलयहेतवे ।
संकर्षणाय तस्मै ते नमः कालाग्निमूर्तये ॥ १०९ ॥

महाकल्पे पञ्चभूतध्वंसपातितविग्रहम् ।
सर्वं सर्वहरो विश्वं संहरत्येव लीलया ॥ ११० ॥

अनन्तकालकलनातीतोऽपि कालरूपधृत् ।
दिनमासर्तृयनादिः कालः कालभयं ह्रियात् ॥ १११ ॥

भयेन यं यमादित्यानिलेन्द्राद्या उपासते ।
देयात्स* मे भयं भक्तत्राता सर्वभयङ्करः ॥ ११२ ॥

अनुल्लङ्घ्यः सर्वगतिर्महारुद्रो दुरासदः ।
मूलप्रकृतिरानन्दः प्रद्युम्नो विश्वमोहनः ॥ १५ ॥

यस्याज्ञोल्लङ्घ्यते नैव विधिशक्रशिवादिभिः ।
सोऽनुल्लंघ्यः सदा पायादपायाद्विश्वतोमुखात् ॥ ११३ ॥

भगवान्मे सर्वगतिर्गतिर्भूयात्कृपानिधिः ।
यत्कृपालेशतोऽशेषास्तरन्तिभवसागरम् ॥ ११४ ॥

दैत्यदानवदुर्वृत्तदुराचारभयङ्करः ।
महारुद्रो रौद्रमूर्तेर्मृत्योश्छिद्याद्भियं मम ॥ ११५ ॥

दुःखेनासाद्यते भक्तिलेशेनापि विनाकृतैः ।
दुरासदः स मे भूयादासन्नः सर्वतो विभुः ॥ ११६ ॥

त्वमेव मूलप्रकृतिस्त्रिजगत्कारणं प्रभो ।
भवाख्यादन्धतमसात्तदस्मान्मोचयाशुभात् ॥ ११७ ॥

सच्चिदानन्दरूपस्त्वं जगदानन्दकारणम् ।
आनन्दोऽन्वर्थको भूयास्त्वं मह्यं नन्दनन्दन ॥ ११८ ॥

यद्भक्तैः प्राप्यते सर्वसम्पत्साम्राज्यकारिणी ।
ऋद्धिर्ऋद्धिप्रदः सोऽस्तु प्रद्युम्नः कामपूरकः ॥ ११९ ॥

---

*दो धातुः ख[illegible]नार्थः

मायेश्वराखिलं विश्वं सद्यो मोहयसि प्रभो ।
विश्वमोहन मोहान्ध्यं मम नाशय सन्ततम् ॥ १२० ॥

महामायो विश्वबीजं परशक्तिः सुखैकभूः ।
सर्वकाम्योऽनन्तलीलः सर्वभूतवशङ्करः ॥ १६ ॥

महतामप्यनुल्लंघ्या माया मायेश्वरस्य ते ।
मायाग्रस्तं महामाय तस्या उन्मोचयाशु माम् ॥ १२१ ॥

विचित्रविविधप्राणिफलपत्रादिसंभृतः ।
विश्ववृक्षो विश्वबीजं त्वं तद्वीजं सनातनम् ॥ १२२ ॥

अनन्तशक्तिसन्दोहशालिनां महतामपि ।
परशक्तिस्त्वमेवैकोऽशेषशक्त्युद्भवाश्रयः ॥ १२३ ॥

ऐकान्तिकसुखोद्भूतिभूमिस्त्वमेक एव हि ।
सुखैकभूः सदा सौख्यदायी भूयाः कृपादृशा ॥ १२४ ॥

सर्वदैकान्तिकानन्दमयत्वाद्विश्वतोऽभयः ।
वरेण्यः सर्वकाम्यस्त्वं दास्ये स्वे मां नियोजय ॥ १२५ ॥

लीलास्त्वदीया भगवञ्शेषाशेषमुखैरपि* ।
वर्ण्यन्ते नानन्तलील दुःखादुद्धर लीलया ॥ १२६ ॥

त्वत्तन्त्र एव तिष्ठासुः स्वतोऽहं, नापि ते क्षतिः ।
श्लथसे मे स्वदास्येऽपि सर्वभूतवशङ्करः ॥ १२७ ॥

अनिरुद्धः सर्वजीवो हृषीकेशो मनस्पतिः ।
निरुपाधिप्रियो हंसोऽक्षरः सर्वनियोजकः ॥ १७ ॥

* शेषस्याशेषमुखैरित्यर्थः

सृष्टिस्थित्यन्तादिचेष्टा केनचिन्नापि रुध्यते ।
यस्यानिरुद्धो भूयान्मे भक्त्या रुद्धः सदा हृदि ॥ १२८ ॥

प्राणिनां जीवरूपेण हृत्पद्मे वसतीश्वरः ।
तान्वा जीवयतीष्टे वा सर्वजीवोऽस्तु मत्प्रियः ॥ १२९ ॥

यः स्वभासा भासितानामिन्द्रियाणामधीश्वरः ।
हृषीकेशः स मे तेषामुपशान्ति प्रयच्छतात् ॥ १३० ॥

स्वचक्रवर्तिचित्तस्य सर्वत्रप्रेरको भवान् ।
मनस्पतिर्मे भगवान् सत् ज्ञानेऽस्तु प्रवर्तकः ॥ १३१ ॥

अविद्योपाहितो जीवो विद्योपाहित ईश्वरः ।
तन्निष्क्रान्तस्तुरीयोऽस्तु निरुपाधिप्रियः प्रियः ॥ १३२ ॥

यातायातकरः प्राणो हंस इत्यक्षरद्वये ।
हन्त्यविद्यातमो हंसः प्रीयतां प्राणचालकः ॥ १३३ ॥

अच्युतोऽविकृतोऽनन्तोऽक्षर इत्युच्यसे बुधैः ।
प्रणवो वा त्रयीसारस्तन्निष्ठः स्यां कदा विभो ॥ १३४ ॥

नियोजयसि कार्ये स्वे सर्वं सर्वनियोजक ।
स्वाङ्घ्रिपूजोत्सवे नित्यं मामप्याशु नियोजय ॥ १३५ ॥

ब्रह्मा प्राणेश्वरः सर्वभूतभृद्देहनायकः ।
क्षेत्रज्ञः प्रकृतिस्वामी पुरुषो विश्वसूत्रधृत् ॥ १८ ॥

उद्युंक्षे त्वं यदा सृष्टौ तदा ब्रह्मेति कथ्यसे ।
विश्वं सृजसि विश्वेशोऽदृष्टालोचनपूर्वकम् ॥ १३६ ॥

प्राणिनां प्राणसंरोधश्वासोच्छ्वासादिकर्म यत् ।
तत्र प्राणेश्वरो हेतुः प्राणानां मेऽस्तु स प्रियः ॥ १३७ ॥

आकाशादीनि भूतानि सत्त्वानि च बिभर्ति यः ।
विश्वम्भरः स मे सर्वभूतभृत् सुश्रियं श्रियात् ॥ १३८ ॥

ईश्वरोऽयं देहभृतां यथादृष्टं प्रियाप्रिये ।
तान्प्रापयति स्वेनैव महिम्ना देहनायकः ॥ १३९ ॥

क्षराणि क्षेत्राण्यक्षरः क्षेत्रज्ञश्चिन्मयः पुमान् ।
वसन्क्षेत्रपुरे भोगान्भुंक्ते षोडशधा स्थितान् ॥ १४० ॥

प्रकृत्या प्रकृतिस्वामी क्रीडन्स स्वेच्छयाखिलम् ।
विश्वं जनयति ब्रह्मपिता शम्भुपितामहः ॥ १४१ ॥

चतुर्विंशतितत्त्वौघनिर्मितायां स्वलीलया ।
पुर्यां शयानः पुरुषः श्रेयसेऽस्तु सदा मम ॥ १४२ ॥

सूत्रात्मा वा सूत्रधारो नाट्यनिर्वाहको यथा ।
तद्वद्विश्वस्यापि सूत्रधारोऽयं विश्वसूत्रधृत् ॥ १४३ ॥

अन्तर्यामी त्रिधामान्तः साक्षी त्रिगुण ईश्वरः ।
योगिगम्यः पद्मनाभः शेषशायी श्रियःपतिः ॥ १९ ॥

अन्तर्यामी हृदावासः सर्वस्य बुद्धिचोदकः ।
भूयान्मे सर्वदा प्रेयःश्रेयोमार्गप्रदर्शकः ॥ १४४ ॥

सूर्यचन्द्राग्नयो यस्य हृल्ललाटशिरांसि च ।
त्रीणि धामानि मुख्यानि त्रिधामा स प्रसीदतात् ॥ १४५ ॥

कुर्वतेऽखिलकर्माणि गुणाः प्रकृतिसंभवाः ।
आत्मा साक्षितया तिष्ठन्नन्तः साक्षी न लिप्यते ॥ १४६ ॥

ब्रह्मा हरिर्हरश्चैते त्रिगुणा रचितास्त्वया ।
प्रभो सृष्टयादिकर्तारो येन स त्रिगुणोऽवतात् ॥ १४७ ॥

ऐश्वर्येण महिष्ठेन स्वेनैव त्रिजगत्पतिः ।
विश्वस्येष्टे स मे दिश्यादैश्वर्यमीश्वरः प्रभुः ॥ १४८ ॥

योगीश योजितात्मानो योगिनस्त्वामुपासते ।
ये भक्त्या सन्ततं योगिगम्यस्तैर्लभ्यसेऽचिरात् ॥ १४९ ॥

दशदिक्पत्रशोभाढ्यं विश्वपद्मं जगत्पते ।
त्वन्नाभिह्रदसम्भूतं पद्मनाभ नमोऽस्तु ते ॥ १५० ॥

जीवादृष्टविशेषो यो लयस्यान्तेऽपि शिष्यते ।
स शेषस्तत्र यः शेते शेषशायी स ईश्वरः ॥ १५१ ॥

श्रियः पतिस्तदाश्लिष्टः सदा तत्सेविताङ्घ्रिधृत् ।
भ्रूक्षेपमात्रदत्तश्रीर्भक्तेभ्यः श्रीप्रदोऽस्तु मे ॥ १५२ ॥

श्रीसदोपास्यपादाब्जोऽनन्तश्रीः श्रीनिकेतनः ।
नित्यंवक्षःस्थलस्थश्रीः श्रीनिधिः श्रीधरो हरिः ॥ २० ॥

उपास्यते सदा यस्य पादपद्मयुगं श्रिया ।
श्रीसदोपास्यपादाब्जस्तुष्टो भूयात्सदा स मे ॥ १५३ ॥

इन्द्रादीन्भक्तितुष्टो यो समृद्ध्यर्पणतो हरिः ।
अनन्तश्रीस्तोषयति तुष्यान्मयि स सद्गतिः ॥ १५४ ॥

श्रीवासभूमिः श्रीस्वामी श्रियावीजितचामरः ।
तया तोषितसद्भक्तः श्रीदोऽस्तु श्रीनिकेतनः ॥ १५५ ॥

यस्य वक्षःस्थलं भाति श्रियाश्लिष्टं स सन्ततम् ।
नित्यंवक्षःस्थलस्थश्रीः श्रीपतिः श्रीकरोऽस्तु मे ॥ १५६ ॥

श्रियाः सर्वोत्तमाया यो निदानं निधिरुत्तमः ।
अनन्तः श्रीनिधिः सोऽस्तु निधिर्मेऽखिलकामदः ॥ १५७ ॥

अन्येषां दुर्लभाया यः श्रिया धारयिता स मे ।
श्रीधरः श्रिय आधारः श्रीकरो भवतात्सदा ॥ १५८ ॥

जन्मजन्मार्जिताघौघहरो हारी हरिः प्रभुः ।
भक्तानां परमानन्दकरः कालभयङ्करः ॥ १५९ ॥

वश्यश्रीर्निश्चलश्रीदो विष्णुः क्षीराब्धिमन्दिरः ।
कौस्तुभोद्भासितोरस्को माधवो जगदार्तिहा ॥ २१ ॥

यत्तन्त्रा [श्रीः सदास्ते स वश्यश्रीः श्रीप्रदोऽस्तु मे ।
दारिद्र्याम्भोधिमग्नाय दौर्गत्योपहताय च ॥ १६० ॥

विद्युदुद्द्योतवन्नित्यं चञ्चलाप्यध्रुवापि च ।
त्वद्भक्ताञ्श्रीः सदोपास्ते निश्चलश्रीद माधव ॥ १६१ ॥

विश्वं व्याप्नोति भगवान् विष्वग्विश्वम्भरः परः ।
विष्णुः कृष्णादिरूपेण तोषयन्भक्तिभावितान् ॥ १६२ ॥

सतां सात्त्विकवृत्तीनां स्वान्ते* व क्षीरसागरे ।
क्षीराब्धिमन्दिरः शेषे शेते मेऽस्त्वक्षिगोचरः ॥ १६३ ॥

उद्भासितं यस्य वक्षःस्थलं कौस्तुभदीप्तिभिः ।
कौस्तुभोद्भासितोरस्को मन्मोहान्ध्यं हिनस्तु सः ॥ १६४ ॥

मायाया वा महालक्ष्म्याः पतिर्यः प्रथितः स मे ।
मायाकालुष्यदारिद्र्ये माधवो हन्तु तत्क्षणात् ॥ १६५ ॥

त्रिजपदार्तिदावाग्निनिर्वापणघनावली ।
सुधामयी कृपा यस्य सोऽवताज्जगदार्तिहा ॥ १६६ ॥

---

*व इति उपमार्थः । शात्रवं व यशः पपुरिति कालिदासः ।

श्रीवत्सवक्षा निःसीमकल्याणगुणभाजनः ।
पीताम्बरो जगन्नाथो जगत्त्राता जगत्पिता ॥ २२ ॥

विद्युद्वच्चञ्चलापि श्रीर्न मुञ्चति कदाचन ।
यस्य वक्षः स श्रीवत्सवक्षाः श्रीवत्सलाञ्छनः ॥ १६७ ॥

अनन्तगुणरत्नौघागण्यकल्याणशेवधिः ।
श्रेयसेऽस्तु स निःसीमकल्याणगुणभाजनः ॥ १६८ ॥

विद्युदुद्द्योतदीप्ताग्नितप्तस्वर्णसुवर्णभृत् ।
वासो यस्य स कृष्णोऽव्यात्पीताम्बरोम्बुभृन्निभः ॥ १६९ ॥

जगता नाथ्यतेऽशेषमैश्वर्यं जगतां पतिः ।
जगन्नाथः स मेऽनाथायास्तु नाथो विशेषतः ॥ १७० ॥

जगन्ति त्रीणि यो नित्यं त्रायते महतो भयात् ।
जगत्त्राता स मां विष्णुस्त्रायतां शरणं सताम् ॥ १७१ ॥

यदिच्छयैव सृजति विश्वं विधिर्जगत्पिता ।
पालने रक्तचित्तस्तु स्वयं पातात्स मां सदा ॥ १७२ ॥

जगद्बन्धुर्जगत्स्रष्टा जगद्धाता जगन्निधिः ।
जगदेकस्फुरद्वीर्यो नाहंवादी जगन्मयः ॥ २३ ॥

सर्वेश सर्व एवात्र सन्ति कारणबान्धवाः ।
अहेतुबन्धुस्त्वं त्वेव जगद्बन्धुर्न मे परः ॥ १७३ ॥

स्रष्टा स नाममात्रेण स्रष्टा सृष्टेस्तु तत्त्वतः ।
जगत्स्रष्टा त्वमेवैकः स्वतंत्रः स्रष्टृसर्जकः ॥ १७४ ॥

शेषरूपेण जगतां धर्ता भर्ता य ईश्वरः ।
जगद्धाता स मां धेयाद्विश्वपोषणरक्तधीः ॥ १७५ ॥

निधौ जलनिधौ वापि यथा वस्वम्बुसञ्चयः ।
तथा जगन्निधावेव जगतामुद्भवःस्थितिः ।। १७६ ।।

भावत्कमेव विलसद्वीर्यं जगति वर्तते ।
जगदेकस्फुरद्वीर्यं शान्ति वर्धय मेऽच्युत ।। १७७ ।।

परिपूर्णोऽपि पूर्णाहन्तयानुपमया विभुः ।
नाहंवाद्यनहङ्कारो विश्वकर्ताप्यलेपकः ।। १७८ ।।

जगतो भिन्नबुद्धिर्यस्त्वयि विश्वात्मके विभौ ।
सोऽबुधोऽतस्तत्त्वबोधं स्वं दिश्यान्मे जगन्मयः ।। १७९ ।।

सर्वाश्चर्यमयः सर्वसिद्धार्थः सर्ववीरजित् ।
सर्वामोघोद्यमो ब्रह्मरुद्राद्युत्कृष्टचेतनः ।। २४ ।।

परात्परं सर्वतस्त्वत्स्वातंत्र्यं कर्म चाखिलम् ।
अत्याश्चर्यकरं विष्णो सर्वाश्चर्यमय प्रभो ।। १८० ।।

सर्वेऽपि कामाः पूर्णास्ते पूर्णकामस्य र्वाषतुः ।
कामानां सर्वसिद्धार्थं सिद्धार्थं कुरु मामपि ।। १८१ ।।

कामादय अजय्या ये सदैतानपि शक्तिमान् ।
वीराञ्जयस्यनुपमो वीरस्त्वं सर्ववीरजित् ।। १८२ ।।

यस्य सर्वोद्यमः सार्थः सदास्त्युद्यमिनां वरः ।
सर्वामोघोद्यमः स श्रीवल्लभो वल्लभोऽस्तु मे ।। १८३ ।।

यत्सार्वज्ञ्यं विधिहरशक्राद्युत्कृष्टकोटिकम् ।
सार्वज्ञ्यदोऽस्तु स ब्रह्मरुद्राद्युत्कृष्टचेतनः ।। १८४ ।।

शम्भोः पितामहो ब्रह्मपिता शक्राद्यधीश्वरः ।
सर्वदेवप्रियः सर्वदेवमूर्तिरनुत्तमः ।। २५ ।।

तमोर्मूर्तिर्लयहेतुस्त्वत्पुत्रालिकजो हरः ।
शम्भोः पितामहोऽतोऽसि सर्वसृष्टेस्त्वमीश्वरः ॥ १८५ ॥

क्षीरार्णवे शेषशय्यो रमाङ्कस्थपदाम्बुजः ।
नाभ्यम्बुजाज्जातनाभिजन्मा ब्रह्मपिता भवान् ॥ १८६ ॥

शक्रादिदेववृन्दस्य वन्द्यश्चानुत्तरर्द्धिकः ।
श्रेयःप्रदो ममाप्यस्तु सदा शक्राद्यधीश्वरः ॥ १८७ ॥

आत्मवत्प्रेमपात्रं ते देवालेखर्षभादयः ।
सर्वदेवप्रियः सोऽस्तु हार्दाधारो दयाकरः ॥ १८८ ॥

सर्वे देवगणा यस्य स्वरूपं सन्ति तत्त्वतः ।
स बिभर्त्वातुरान्सर्वदेवमूर्तिर्जगत्पतिः ॥ १८९ ॥

यतोऽवमा एव सर्वे महेश्वरपुरोगमाः ।
सुरा अपि स मे दिश्याद्दृढां भक्तिमनुत्तमः ॥ १९० ॥

सर्वदेवैकशरणं सर्वदेवैकदैवतम् ।
यज्ञभुग्यज्ञफलदो यज्ञेशो यज्ञभावनः ॥ २६ ॥

शरण्योऽशेषदेवानामेको यः शरणं प्रभुः ।
सर्वदेवैकशरणं शरणं सोऽस्तु मे हरिः ॥ १९१ ॥

देवादिदेवो देवेशः सर्वैस्तैर्य उपास्यते ।
मदुपास्योऽपि भूयात्स सर्वदेवैकदैवतम् ॥ १९२ ॥

ब्रह्मरुद्राग्निदिक्कालदेवेभ्यो हविरर्पितम् ।
यज्ञभुग्विष्णुरेवैतद्ग्रहणेऽधिकृतः स्वयम् ॥ १९३ ॥

स्वाभीष्टफलदानेऽपि यजमानस्य तत्परः ।
प्रतिभूर्यज्ञफलदो विष्णुरेव च नापरः ॥ १९४ ॥

यज्ञस्येष्टेऽयमेवात्र यज्ञेशोऽसौ त्रयीतनुः ।
दत्तवेदादृतज्येष्ठपुत्रो वेदविदुत्तमः ॥ १९५ ॥

यज्ञानां स्थितिकृद्यज्ञदृढनिष्ठाप्रदः प्रभुः ।
यज्ञभावन एवास्ति सोऽस्तु मद्यज्ञतोषितः ॥ १९६ ॥

**यज्ञत्राता यज्ञपुमान्वनमाली द्विजप्रियः ।**
**द्विजैकमानदो विप्रकुलदेवोऽसुरान्तकः ॥ २७ ॥**

यज्ञान्तरायनाशेन तत्त्राता योऽनिशं सताम् ।
यज्ञत्राता स मे त्राणतत्परोऽस्तु दिवानिशम् ॥ १९७ ॥

यज्ञाधिष्ठातृपुरुषो यज्ञो वै विष्णुरित्यतः ।
उच्यसे त्वं यज्ञपुमान् दिश्यान्मेऽनुत्तमां गतिम् ॥ १९८ ॥

वन्यस्रग्भिर्गोपबालासंचिताभिरलङ्कृतः ।
वनमालिन्ननाथार्तिनाशायोदेतु ते मतिः ॥ १९९ ॥

द्विजानां कर्मनिष्ठानां नित्यं त्वत्सक्तचेतसाम् ।
प्रेमास्पदं त्वमेवासि विहायान्यद्द्विजप्रिय ॥ २०० ॥

तृतीयोल्लासः

सद्वृत्तानां द्विजाग्र्याणां त्वमेवैकः परायणम् ।
तत्संमानं विधत्से त्वं द्विजैकमानदाच्युत ॥ २०१ ॥

त्वद्भक्त्यमृतपूर्णानां सद्विप्राणां कुलक्रमात् ।
आराध्यदेवस्त्वं विप्रकुलदेवोऽसि संततम् ॥ २०२ ॥

देवेषु साधुवृत्तेषु सत्कर्मसु द्विषद्धियाम् ।
असुराणामन्तकस्त्वमसुरान्तक सत्प्रभो ॥ २०३ ॥

सर्वदुष्टान्तकृत्सर्वसज्जनानन्यपालकः ।
सप्तलोकैकजठरः सप्तलोकैकमण्डनम् ॥ २८ ॥

अशेषदोषदुष्टानां नाशस्य प्रभवोऽसताम् ।
सर्वदुष्टान्तकृत्स स्तान्मद्दोषान्तकरो हरिः ॥ २०४ ॥

सदाचारवतां सर्वसज्जनानां महाभयात् ।
पाता यः पातु मां सर्वसज्जनानन्यपालकः ॥ २०५ ॥

यस्यैकस्यान्तरे सप्तलोकास्तिष्ठन्ति सान्तराः ।
सप्तलोकैकजठरोऽधिशेतां हृदगुहां मम ॥ २०६ ॥

सप्तलोकान्य एकाकी मण्डयत्यमलप्रभः ।
हृदि मे भासतां भास्वान्सप्तलोकैकमण्डनम् ॥ २०७ ॥

सृष्टिस्थित्यन्तकृच्चक्री शार्ङ्गधन्वा गदाधरः ।
शङ्खभृन्नन्दकी पद्मपाणिर्गरुडवाहनः ॥ २९ ॥

अशेषलोकसृष्ट्यादिक्रीडयेव श्रमातुरः ।
सृष्टिस्थित्यन्तकृत्स्वान्तं विश्रान्त्यै विशतान्मम ॥ २०८ ॥

संसारचक्रं चक्रेण प्रलयानलतेजसा ।
चक्रिन् पालयसीश त्वं छिन्ध्ये तद्धारया द्विषः ॥ २०९ ॥

शार्ङ्गधन्वा त्वमेकोऽपि सर्वान्देवरिपून्युधि ।
हत्वा बिभर्षि साधून्द्राक् तत्पालनपरः सदा ॥ २१० ॥

गदाधरस्त्वं गदया वज्रं वज्रिण आहवे ।
न्यक्करोषि तदाघातहतपातितदानवः ॥ २११ ॥

पाञ्चजन्यं यशः शुभ्रमिव दातुं बिभर्ति यः ।
भक्तेभ्यः शङ्खभृन्सोऽस्तु तन्नादानन्ददः सदा ॥ २१२ ॥

नन्दकी तीक्ष्णधारेण खड्गेनाशेषविद्विषः ।
छित्त्वास्मान्मोचयत्वाशु सर्वोपद्रवभीतितः ॥ २१३ ॥

विकारषोडशदलं जगदम्भोजमुद्वहन् ।
श्रीविष्णुः पद्मपाणिर्मे स्पृश्यात्कं पाणिपद्मतः ॥ २१४ ॥

त्रयीस्वरूपो गरुडो वहंस्त्वां भक्तिरक्तहृत् ।
सविधे त्वरयायाहि त्वं मे गरुडवाहन ॥ २१५ ॥

अनिर्देश्यवपुः सर्वपूज्यस्त्रैलोक्यपावनः ।
अनन्तकीर्तिनिःसीमपौरुषः सर्वमङ्गलः ॥ ३० ॥

ब्रह्माद्यैरपि यत्तत्त्वं परिच्छेत्तुं न पार्यते ।
अनिर्देश्यवपुर्मेऽस्तु वपुष्मानेव गोचरः ॥ २१६ ॥

सुरासुरनराद्यैर्यः पूज्यते भुवनेऽखिलैः ।
स सर्वपूज्यः पूज्यो मे भूयाद्भक्तेश्वरेश्वरः ॥ २१७ ॥

यत्पादाग्रोद्भवा गंगा पुनाति भुवनत्रयम् ।
त्रैलोक्यपावनः सोऽत्र पुण्यकीर्तिः पुनातु माम् ॥ २१८ ॥

अनन्तानन्दफलदा यत्कीर्तिर्मुक्तिकारिणी ।
अनन्तकीर्तिः कीर्तिं मे दिश्यान्नित्यां सुखावहाम् ॥ २१९ ॥

सर्ववीरैरजय्यस्य जिष्णोश्च जयदायिनः ।
पौरुषं वर्णनातीतं निःसीमपौरुषस्य ते ॥ २२० ॥

विविधानां मंगलानां तत्त्वदो मंगलायनम् ।
यः सर्वमंगलः सोऽस्तु मम मांगल्यदो हरिः ॥ २२१ ॥

सूर्यकोटिप्रतीकाशो यमकोटिदुरासदः ।
ब्रह्मकोटिजगत्स्रष्टा वायुकोटिमहाबलः ॥ ३१ ॥

ब्रह्माण्डानन्तसूर्याणां यत्कृतैव द्युतिः, स्वयम् ।
सूर्यकोटिप्रतीकाशः किं न स्यात्स महोनिधिः ॥ २२२ ॥

दुःखेनासाद्यते द्विड्भिर्यमकोटिरिव प्रभुः ।
अन्तकस्याप्यन्तकोऽयं यमकोटिदुरासदः ॥ २२३ ॥

ब्रह्मणः कोटिगुणितां स्रष्टौ यच्छक्तिरस्ति सः ।
ब्रह्मकोटिजगत्स्रष्टा पुनर्जन्मभियं ह्रियात् ॥ २२४ ॥

वायुकोटेरपेक्षातो यद्बलमधिकं महत् ।
पुष्णातु मद्बलं सोऽत्र वायुकोटिमहाबलः ॥ २२५ ॥

कोटीन्दुजगदानन्दो शम्भुकोटिमहेश्वरः ।
कुबेरकोटिलक्ष्मीवाञ्छक्रकोटिविलासवान् ॥ ३२ ॥

परमानन्दरूपत्वात्कोटीन्द्वाह्लाददायकः ।
कोटीन्दुजगदानन्दी ब्रह्मानन्दप्रदोऽस्तु मे ॥ २२६ ॥

महेश्वरात्कोटिगुणं महैश्वर्यं जगत्प्रभोः ।
ऐश्वर्यदोऽस्तु मह्यं स शंभुकोटिमहेश्वरः ॥ २२७ ॥

लक्ष्मीवत्त्वं कोटिगुणं कुबेरात्कमलापतेः ।
कुबेरकोटिलक्ष्मीवान्दैवीं दिश्यात्परां श्रियम् ॥ २२८ ॥

सर्वैश्वर्यं कोटिगुणमिन्द्राद्ब्रह्माण्डविस्तृतम् ।
यस्य, दत्तात्परामृद्धिं शक्रकोटिविलासवान् ॥ २२९ ॥

*कन्दर्पकोटिलावण्यो दुर्गाकोटचरिमर्दनः ।
समुद्रकोटिगम्भीरस्तीर्थकोटिसमाह्वयः ॥ ३३ ॥

जगन्मोहनलावण्यं यस्य कन्दर्पदर्पकृत् ।
कोटिकन्दर्पलावण्यः स कामान्मे पिपर्त्वलम् ॥ २३० ॥

दुर्गापेक्षात्यन्तगुणो यस्य द्विट् ध्वंसने क्षणः ।
स क्रियान्मे द्विषन्नाशं दुर्गाकोटचरिमर्दनः ॥ २३१ ॥

अनन्ताम्भोधिवद्यस्य स्वरूपं कलनातिगम् ।
समुद्रकोटिगम्भीरश्चित्तचापल्यहास्तु मे । ॥ २३२ ॥

स्मृत्यैव कीर्त्या नाम्ना वा पादाग्रोद्भूततीर्थराट् ।
त्वं तारयसि दीनार्तांस्तीर्थकोटिसमाह्वयः ॥ २३३ ॥

हिमवत्कोटिनिष्कम्पः कोटिब्रह्माण्डविग्रहः ।
कोटचश्वमेधपापघ्नो यज्ञकोटिसमार्चनः ॥ ३४ ॥

यो द्यां दधार भूमिं च साब्धिद्वीपकुलाचलाम् ।
हिमवत्कोटिनिष्कम्पः सोऽव्यान्मां कूर्मरूपधृत् ॥ २३४ ॥

जङ्गमाजङ्गमवपुर्वैराजं रूपमाश्रितः ।
विश्वरूपः स मां पातात्कोटिब्रह्माण्डविग्रहः ॥ २३५ ॥

अश्वमेधादियज्ञानां भर्ता भोक्ता फलप्रदः ।
कोटचश्वमेधपापघ्नो भूयान्मेऽखिलपापहा ॥ २३६ ॥

केवलार्हणया यस्य भक्तिसंभारपूर्णया ।
मुक्तिर्भवति तं स्तौमि यज्ञकोटिसमार्चनम् ॥ २३७ ॥

---

* कोटिकन्दर्पलावण्यः—इत्येव पाठः ।

**सुधाकोटिस्वास्थ्यहेतुः कामधुक्कोटिकामदः ।**
**ब्रह्मविद्याकोटिरूपः शिपिविष्टः शुचिश्रवाः ॥ ३५ ॥**

जन्ममृत्युजराव्याधिशान्तिर्नौषधसेवनात् ।
सुधाकोटिस्वास्थ्यहेतुर्यावन्न सेव्यते हरिः ॥ २३८ ॥

कोटिकामदुहां जेता भक्तानां कामपूरकः ।
कामान्पिपर्तु मे दिव्यान् कामधुक्कोटिकामदः ॥ २३९ ॥

अनन्तोपनिषद्वाक्यैर्यत्स्वरूपं निरूप्यते ।
ब्रह्मविद्याकोटिरूपो ब्रह्मज्ञानप्रदोऽस्तु मे ॥ २४० ॥

सामान्यदृष्टया पश्यन्ति कथ्यन्ते पशवो बुधैः ।
जीवास्तेषु निविष्टो यः *शिपिविष्टः स तुष्यतु ॥ २४१ ॥

यत्कीर्तिर्ज्ञानसौख्याय मुक्तये चातिपावनी ।
शुचिश्रवाः स मे कीर्ति देयान्मुक्ति च माधवः ॥ २४२ ॥

**विश्वम्भरस्तीर्थपादः पुण्यश्रवणकीर्तनः ।**
**आदिदेवो जगज्जैत्रो मुकुन्दः कालनेमिहा ॥ ३६ ॥**

विश्वं बिभर्ति विश्वात्मा सस्यादिरूपतो विभुः ।
विश्वम्भरो भ्रियान्मां स त्रिजगद्भरणक्षमः ॥ २४३ ॥

गंगाख्यस्तीर्थराजो यत्पादजो भुवनत्रयीम् ।
पुनाति तीर्थपादः स पावनाग्र्यः पुनातु माम् ॥ २४४ ॥

यत्कीर्तनं यच्छ्रवणं पावनं पुण्यवर्धनम् ।
स मां पुनातु भगवान् पुण्यश्रवणकीर्तनः ॥ २४५ ॥

---

* शिपिः — पशुरित्यर्थः ।

सृष्टेः पूर्वमपि स्वेन ज्योतिषा भास्वरोऽथवा ।
सर्वादिर्दानशौण्डोऽसावादिदेवः प्रसीदतात् ॥ २४६ ॥

जगज्जैत्रोऽतिक्रान्तो यो गमागममयं भवम् ।
भक्तानां भवबद्धानां छिद्यात्स पाशवेदनाम् ॥ २४७ ॥

मुकुन्दो मुक्तिदातायं भक्तानां भवबन्धकृत् ।
भूयात्स मम संसारबन्धमोचनतत्परः ॥ २४८ ॥

कालकक्ष्यामतिक्रान्तः कालनेमिं जघान यः ।
हरिर्हतात्कालभयं ममापि कालनेमिहा ॥ २४९ ॥

**वैकुण्ठोऽनन्तमाहात्म्यो महायोगीश्वरोत्सवः ।**
**नित्यतृप्तो लसद्भावो निःशङ्को नरकान्तकः ॥ ३७ ॥**

विरुद्धां गतिमन्योन्यं भूम्यादीनां स्वशक्तितः ।
कुण्ठीकरोति वैकुण्ठः स वैकुण्ठप्रदोऽस्तु मे ॥ २५० ॥

अनन्तमपरिच्छिन्नं माहात्म्यं त्रिजगत्पतेः ।
यस्य सोऽनन्तमाहात्म्यो भक्तिमाहात्म्यदोऽस्तु मे ॥ २५१ ॥

सनकादिमुनीन्द्राणां यदाविर्भावतो महान् ।
उत्सवो जायतेऽन्तः स महायोगीश्वरोत्सवः ॥ २५२ ॥

कामस्य जनकः पूर्णकामः कामानपेक्षकः ।
नित्यतृप्तः स मां दृष्टया तर्पयत्वमृताक्तया ॥ २५३ ॥

भव्यपूर्णः शुभो भावो यस्य श्लाघ्यतमः प्रभोः ।
लसद्भावः स तं भावं मय्याविष्कुरुतां शिवम् ॥ २५४ ॥

आत्मरूपं जगद्यस्य तस्य शंका च भीः कुतः ।
अत एवास्ति निःशङ्कस्तं स्तौमि बलिनां वरम् ॥ २५५ ॥

नरकासुरहन्ता यो भक्तानां दुर्गतेर्भयात् ।
त्राता, मां त्रायतां नित्यं नरकान्नरकान्तकः ॥ २५६ ॥

दीनानाथैकशरणं विश्वैकव्यसनापहः ।
जगत्कृपाक्षमो नित्यकृपालुः सज्जनाश्रयः ॥ ३८ ॥

एक एवास्ति शरणं दीनानां दुःखितात्मनाम् ।
दीनानाथैकशरणं सदा भूयाद्गतिः स मे ॥ २५७ ॥

अपहन्त्येक एवायं विश्वस्य विश्वतो भयम् ।
सर्वापदां च संघातं विश्वैकव्यसनापहः ॥ २५८ ॥

जगन्ति त्रीण्येवैको योऽनन्तया कृपया स्वया ।
जगत्कृपाक्षमः शक्तस्त्रातुं त्रातास्तु मे प्रभुः ॥ २५९ ॥

कदाचित्कोऽपि केनापि हेतुना दयते परम् ।
नित्यं दयालुस्त्वं नित्यकृपालुस्तेन कथ्यसे ॥ २६० ॥

सत्कर्मसुप्रवृत्तीनां सतां सन्मार्गचारिणाम् ।
आश्रयस्त्वं गतिश्चासि सज्जनाश्रय सत्प्रिय ॥ २६१ ॥

योगेश्वरः सदोदीर्णो वृद्धिक्षयविवर्जितः ।
अधोक्षजो विश्वरेताः प्रजापतिशताधिपः ॥ ३९ ॥

योगेश्वरोऽष्टांगयोगफलदाताथवेश्वरः ।
योगिनां त्वं तदाह्लादामृतपायनतत्परः ॥ २६२ ॥

ऐश्वर्यादीनि सर्वाणि पूर्णान्युत्कर्षवन्त्यलम् ।
सदा तिष्ठन्ति देवेश सदोदीर्ण त्वयि प्रभौ ॥ २६३ ॥

अव्ययस्याप्रमेयस्याच्युतस्य भगवंस्तव ।
कुतो वृद्धिक्षयौ नाथ वृद्धिक्षयविवर्जित ॥ २६४ ॥

भूद्युलोकान्तरे यश्च विराट्रूपेण जायते ।
*अधोक्षजः स मां पायादिन्द्रियाणामगोचरः ॥ २६५ ॥

विश्ववृक्षस्य बीजं त्वं विश्वस्मिन् बीजशक्तिभृत् ।
विश्वरेतास्त्वमेवासि जनकः पालको हरिः ॥ २६६ ॥

प्रजासृजामनेकेषां दक्षादीनामपि प्रभुः ।
ममापि स्वामी भूयात्स प्रजापतिशताधिपः ॥ २६७ ॥

शक्रब्रह्मार्चितपदः शम्भुब्रह्मोर्ध्वधामगः ।
सूर्यसोमेक्षणो विश्वभोक्ता सर्वस्य पारगः ॥ ४० ॥

त्रिलोकपतिनेन्द्रेण ब्रह्मणापि जगत्सृजा ।
शक्रब्रह्मार्चितपदश्चार्च्यते धाम वैष्णवम् ॥ २६८ ॥

शम्भोर्धाम्नो ब्रह्मणश्चोत्तरेऽनुपमसम्पदि ।
धाम्नि वैकुण्ठ आसीनः शम्भुब्रह्मोर्ध्वधामगः ॥ २६९ ॥

विराट्स्वरूपस्य यस्य सूर्यसोमौ शुभेक्षणे ।
सूर्यसोमेक्षणः सोऽस्तु मन्मोहतिमिरापहः ॥ २७० ॥

विश्वस्य भोग्यजातस्य भोक्ता यो भोक्तृरूपतः ।
पाता च जगतो विश्वभोक्ता पातान्महापदः ॥ २७१ ॥

निर्वाहकोऽखिलजगत्कार्यजातस्य यः परः ।
सर्वस्य पारगो मेऽस्तु भवसागरतारकः ॥ २७२ ॥

---

* ऊर्ध्वलोकापेक्षयाऽधःशब्देन पृथ्वी कथ्यते, क्षीयते न—इति अक्षं—द्यौरिति ।

जगत्सेतुर्धर्मसेतुर्धरो विश्वधुरन्धरः ।
निर्ममोऽखिललोकशो निःसङ्गोऽद्भुतभोगवान् ॥ ४१ ॥

जगत्सेतुः स मर्यादास्थापकस्त्रिजगत्पतिः ।
सर्वेषां, दिक्पतीनां च नियन्ता विश्वसृट् पिता ॥ २७३ ॥

वर्णाश्रमानुरूप्येणाशेषधर्माणि धारयन् ।
मर्यादाभृद्धर्मसेतुः सेतुरस्तु भवार्णवे ॥ २७४ ॥

धरणीधरधर्ता वा जगन्ति त्रीण्यपि प्रभुः ।
धरो धारयतीशानोऽनन्तरूपः सनातनः ॥ २७५ ॥

अन्यैरसह्यां विश्वस्य धुरं धारयतीश्वरः ।
शेषरूपो, भ्रियान्मां चानाथं विश्वधुरन्धरः ॥ २७६ ॥

अभावत्वाद्द्वितीयस्य तवैकस्य जगत्पतेः ।
ममता निर्गता दूरं निर्ममोऽतोऽसि माधव ॥ २७७ ॥

चतुर्दशानां लोकानां भूरादीनां य ईश्वरः ।
नियन्ताखिललोकेशो दुःखान्मोचयतात्स माम् ॥ २७८ ॥

कर्ता भर्ता विधर्तापि हर्तापि जगतां प्रभुः ।
निरहंकारतोऽसंगो निःसङ्गस्तेन कथ्यते ॥ २७९ ॥

वैकुण्ठरामकृष्णादिध्येयरम्यवपुर्धरः ।
भुङ्क्तेऽद्भुतान्धर्म्यभोगांस्तुष्टोऽस्त्वद्भुतभोगवान् ॥ २८० ॥

वश्यमायो वश्यविश्वो विष्वक्सेनः सुरोत्तमः ।
सर्वश्रेयस्पतिर्दिव्यानर्घभूषणभूषितः ॥ ४२ ॥

सत्त्वादित्रिगुणा माया यद्वश्यं त्रिजगत्स्थितम् ।
नित्यं वश्या प्रभोर्यस्य वश्यमायोऽस्तु स श्रिये ॥ २८१ ॥

विश्वमोहकरी माया दास्ये यस्य सदा स्थिता ।
तद्वश्यत्वे किमाश्चर्यं विश्वस्य वश्यविश्व भोः ॥ २८२ ॥

सह स्वस्वामिभिर्देवादिभिः सर्वैः समन्ततः ।
व्याप्यते यः स मां विष्णुर्विष्वक्सेनः सदावतात् ॥ २८३ ॥

ब्रह्मेन्द्रादिसुरेभ्यो योऽप्युत्तमोऽनुत्तमो हरिः ।
सुरोत्तमः स विश्वेशो दिश्यान्मेऽनुत्तमां गतिम् ॥ २८४ ॥

ऐहिक्यामुष्मिकीणां च सर्वासां सम्पदां पतिः ।
सर्वश्रेयस्पतिर्देयाच्चतुर्वर्गमभीष्टदः ॥ २८५ ॥

अलौकिकैरमूल्यैश्चालंकृतो रत्नभूषणैः ।
मत्स्वान्ते रमतां दिव्यानर्घ्यभूषणभूषितः ॥ २८६ ॥

सर्वलक्षणलक्षण्यः सर्वदैत्येन्द्रदर्पहा ।
समस्तदेवसर्वस्वं सर्वदैवतनायकः ॥ ४३ ॥

सर्वैश्वर्याधिकाराङ्कैश्चक्रचापाङ्कुशादिभिः ।
सर्वलक्षणलक्षण्यो लक्षितो भासतां हृदि ॥ २८७ ॥

प्रह्लादाद्यात्मभक्तार्थं दैत्येन्द्रदर्पकृन्तनः ।
कामादीन्द्विषतो वध्यात्सर्वदैत्येन्द्रदर्पहा ॥ २८८ ॥

सर्वस्ववत्त्रिलोकेशो देवैरपि दुरासदैः ।
समस्तदेवसर्वस्वमादर्त्तव्यो भिजासुभिः ॥ २८९ ॥

विश्वजेताशेषदेवनायकोऽसुरमोहकः ।
नयतान्मामपि श्रेयः सर्वदैवतनायकः ॥ २९० ॥

समस्तदेवतादुर्गं प्रपन्नाशनिपञ्जरः ।
समस्तदेवकवचं सर्वदेवशिरोमणिः ॥ ४४ ॥

भक्तस्य देववृन्दस्य सर्वोपद्रवनाशकः ।
समस्तदेवतादुर्गं ह्नियान्मे दुर्गतिं हरिः ॥ २९१ ॥

स्वेषां सतां प्रपन्नानां वज्रपंजरवद्ध्रुवम् ।
शरणं सोऽवतात् श्रीशः प्रपन्नाशनिपञ्जरः ॥ २९२ ॥

स्वाङ्घ्रिपद्मसमासक्तचेतसो विबुधान्सतः ।
समस्तदेवकवचं रक्षद्रक्ष्यान्महाभयात् ॥ २९३ ॥

ब्रह्मरुद्रेन्द्राद्यखिलामरवृन्दातिपूजितम् ।
शिरोमणिमिव स्तौमि सर्वदेवशिरोमणिम् ॥ २९४ ॥

समस्तभयभिन्नामा भगवान्विष्टरश्रवाः ।
विभुः सर्वहितोदर्को हतारिस्वगतिप्रदः ॥ ४५ ॥

यन्नामकीर्तनं सर्वाघौघमोहभयार्तिहृत् ।
समस्तभयभिन्नामा भवभीतिहरोऽस्तु मे ॥ २९५ ॥

सर्वैश्वर्यादिभिस्तैश्च भूतोत्पत्त्यादिवेदनैः ।
षड्भिर्युक्तः सदा सेव्यो भगवान्प्रीयतां मयि ॥ २९६ ॥

कीर्त्या विस्तीर्णयाशेषपापौघाशनिरूपया ।
वित्तो ममाद्वैतकीर्ति पुष्णातु विष्टरश्रवाः ॥ २९७ ॥

विश्वव्यापी वासुदेवो विश्वाशापूरकः स्वकैः ।
विभवैर्हृदि मे विष्णुर्विभुरुष्यात्स मुक्तिदः ॥ २९८ ॥

सर्वसौहार्दपूर्णस्यावदानं सर्वजन्मिनाम् ।
हितं सर्वहितोदर्कस्यास्ति कस्तत्र गीयते ॥ २९९ ॥

द्विषन्तोऽपि हता येन स्वधाम दययापिताः ।
कदा दयेत मानार्थं हतारिस्वर्गतिप्रदः ॥ ३०० ॥

चतुर्थशतम्

सर्वदैवतजीवेशो *ब्राह्मणादिनियोजकः ।
ब्रह्मशम्भुपरार्ध्यायुर्ब्रह्मज्येष्ठशिशुः स्वराट् ॥ ४६ ॥

अशेषदेववृन्दस्य ब्रह्मादेर्जीविताश्रयः ।
सर्वदैवतजीवेशो सायुज्यं मे प्रयच्छतात् ॥ ३०१ ॥

न केवलं ब्राह्मणादीन्ब्रह्मादीनपि माधवः ।
नियोजयति कार्ये स्वे ब्राह्मणादिनियोजकः ॥ ३०२ ॥

ब्रह्मणश्च शिवाच्चापि यदायुः प्राग्र्यकोटिकम् ।
ब्रह्मशम्भुपरार्ध्यायुर्मदायुः सार्थकं क्रियात् ॥ ३०३ ॥

लालनीयः पालनीयो विश्वसृडपि बालवत् ।
यस्य सोऽव्याज्जगन्नाथो ब्रह्मज्येष्ठशिशुर्हरिः ॥ ३०४ ॥

स्वतंत्रः स्वप्रकाशश्च स्वराड् सोऽयं स्वयंप्रभः ।
मायावश्याय मे दिश्यात्पूर्णस्वातंत्र्यमीश्वरः ॥ ३०५ ॥

विराट् भक्तपराधीनः स्तुत्यः स्तोत्रार्थसाधकः ।
परार्थकर्ता कृत्यज्ञः स्वार्थकृत्यसदोज्झितः ॥ ४७ ॥

सूर्यचन्द्रादिरूपेण राजते वपुरास्थितः ।
वैराजं च विराट् विश्वव्यापी मे हृदि भासताम् ॥३०६ ॥

---

*ब्राह्मणादिनियोजकः—इति पाठः ।

लेखर्षभाद्यैरपि यो नताङ्घ्रिध्वजयुगः प्रभुः ।
सोऽपि भक्तपराधीनः सदा तत्त्राणतत्परः ॥ ३०७ ॥

वरेण्यो वरदः सर्वैः स्तुतीनां फलदः परः ।
स्तुत्यः स भगवानेव गीतैश्वर्यः शिवादिभिः ॥ ३०८ ॥

सर्वकामानुरूपं सत्फलं साधयतीश्वरः ।
स्तोत्राणां प्रतिभूर्लक्ष्मीपतिः स्तोत्रार्थसाधकः ॥ ३०९ ॥

सतां साधुशुभाचारवतामुत्कृष्टयोगिनाम् ।
परार्थकर्ता सर्वार्थसाधको मेऽस्तु सिद्धिदः ॥ ३१० ॥

कालानुरूपसृष्ट्यादिकार्यज्ञानपटुः परः ।
कृत्यज्ञो मम सत्कृत्यचोदको भवतात्सदा ॥ ३११ ॥

पूर्णकामः स्वयं भक्तपूर्णकामधुगव्ययः ।
स्वार्थानपेक्षो मां पातात्स्वार्थकृत्यसदोज्झितः ॥ ३१२ ॥

सदानवः सदाभद्रः सदाशान्तः सदाशिवः ।
सदाप्रियः सदातुष्टः सदापुष्टः सदार्चितः ॥ ४८ ॥

अपक्षयदवीयस्त्वात्सदानव इव स्थितः ।
निर्विकारो हरिर्मह्यं सारूप्यं स्वं प्रयच्छतात् ॥ ३१३ ॥

मंगलानां निधिःश्रेयःप्रदो मंगलमंगलः ।
सदाभद्रः सदा भद्रप्रदो मेऽस्तु सतां गतिः ॥ ३१४ ॥

शांतिप्रदः शान्तिमयः शान्तानां स्वांतसंस्थितः ।
सदाशान्तः सदा शान्ति दिश्यात्सत्त्वगुणाश्रयः ॥ ३१५ ॥

स्वयं सदा शिवमयः शिवायापि शिवत्वदः ।
सदाशिवः शिवं दिश्यान्मह्यं, पूज्यः शिवस्य यः ॥ ३१६ ॥

सर्वात्मभूतः सर्वस्य प्रेयान्प्रियहिते रतः ।
सदाप्रियः स मे प्रेमपात्रं भूयादनारतम् ॥ ३१७ ॥

आत्मलाभाप्तकामत्वात्सदातुष्टः सुखात्मकः ।
सन्तुष्टो मयि भूयात्स संतोषामृततर्पणः ॥ ३१८ ॥

आत्मानन्देन पूर्णत्वात्पूर्णानन्दप्रदः प्रभुः ।
ऋद्धिं पुष्णातु मे श्रीशः सदापुष्टः *स्वपोषकः ॥ ३१९ ॥

ब्रह्मरुद्रेन्द्रचन्द्रार्कवन्दिताङ्घ्रियुगः प्रभुः ।
कामपूर्त्यै प्रपूज्यो यः श्रेयसेऽस्तु सदार्चितः ॥ ३२० ॥

सदापूतः पावनाग्र्यो वेदगुह्यो वृषाकपिः ।
सहस्रनामा त्रियुगश्चतुर्मूर्त्तिश्चतुर्भुजः ॥ ४९ ॥

स्वर्नदीप्रभवोऽल्लेपः पावके पवनादिषु ।
पूतत्वापादको विष्णुः सदापूतः पुनातु माम् ॥ ३२१ ॥

शिवोऽपि पावितो येन पादाग्रोद्भूतगङ्गया ।
स्मृतिमात्रहताघौघः पावनाग्र्यः पुनातु सः ॥ ३२२ ॥

सच्छ्रुतिस्मृतिवेदान्तैरवाङ्मनसगोचरः ।
दुर्ज्ञेयो यो वेदगुह्यः सोऽस्तु मेऽन्तेऽक्षिगोचरः ॥ ३२३ ॥

धर्मरूपेण कामानां वर्षितोद्धारकश्च यः ।
भुवो वराहरूपेण स मे *प्रीयाद्वृषाकपिः ॥ ३२४ ॥

---

*स्वात्मीयभक्तसार्थः

*वृषो धर्मरूपेण सर्वोत्कृष्टः—कपिर्वराहरूपः इति वृषाकपिःश्रुतौ प्रशिद्धः

जगत्प्रपञ्चरूपस्य विराजः सन्त्यनेकशः ।
सहस्रनाम्नो नामानि भूयासुः पापहानि मे ॥ ३२५ ॥

मत्स्यादिरूपैस्त्रिजगदुद्धारायावतारधृत् ।
युगत्रये स्तूयते स त्रियुगः कलिहास्तु मे ॥ ३२६ ॥

श्वेतो रक्तश्च कपिलः कृष्णो युगक्रमाद्धरिः ।
चतुर्मूर्तिश्चतुर्व्यूहधरो वा स प्रसीदतु ॥ ३२७ ॥

शङ्खचक्रगदापद्मैर्भुजा यस्य स्वलङ्कृताः ।
यो वा चतुरवस्थाभुक् स मामव्याच्चतुर्भुजः ॥ ३२८ ॥

भूतभव्यभवन्नाथो महापुरुषपूर्वजः ।
नारायणो मुञ्जकेशः सर्वयोगविनिस्सृतः ॥ ५० ॥

त्रिकालसुखसंपत्तिसौभाग्यदायकः सताम् ।
भूतनाथो भव्यनाथो भवन्नाथोऽस्तु भूतये ॥ ३२९ ॥ ३३० ॥ ३३१॥

अशेषपुरुषाद्यस्य ब्रह्मणोऽपि जनिप्रदः ।
मामप्यव्याज्जगन्नाथो महापुरुषपूर्वजः ॥ ३३२ ॥

न्रादिवर्गस्याश्रयो वा पञ्चभूतायनं च यः ।
नारायणोऽस्तु मे मुक्त्यै धर्माद्दक्षदुहितृजः ॥ ३३३ ॥

जटिलाः स्वर्णवर्णाश्च केशास्तपसि तिष्ठतः ।
यस्य स मुञ्जकेशो मे तपोनिष्ठां प्रयच्छतात् ॥ ३३४ ॥

अशेषयोगप्रभवस्तेषां तत्त्वोपदेशकः ।
दिश्यान्मे योगसंसिद्धिं सर्वयोगविनिःसृतः ॥ ३३५ ॥

**वेदसारो यज्ञसारः सामसारस्तपोनिधिः ।**
**साध्यः श्रेष्ठः पुरार्णर्षिर्निष्ठा शान्तिः परायणम् ।। ५१ ।।**

वेदोपास्यो वेदसारो वेदविदुत्तमोत्तमः ।
विधात्रे वेदविज्ञानज्ञापकः श्रेयसेऽस्तु मे ।। ३३६ ।।

यज्ञेषूपास्य एवैको यज्ञसारस्तदुच्यते ।
प्रतिभूः फलदातापि हविर्भोक्तास्ति तत्त्वतः ।। ३३७ ।।

गीतिसारोद्गीथसाम्ना योऽस्युपास्यस्त्रयीतनुः ।
वेदेषु साक्षात्त्वं साम सामसार नमोऽस्तु ते ।। ३३८ ।।

तपोनिधिः स मां पायाज्जगदनुजिघृक्षया ।
आत्मारामानन्दमयः स्थितस्तपस्यनुत्तमः ।। ३३९ ।।

आराधनासाधनेन साध्यः सिद्धिप्रदो विभुः ।
सिद्धैः साध्यैः सिद्धिकामैः सेव्यः सेव्योऽस्तु मे प्रभुः ।। ३४० ।।

सर्वसम्पत्समृद्धेषु दयौदार्यविभूतिभिः ।
श्रेष्ठः प्रेष्ठः स मे भूयात् श्रेयसां श्रेय उत्तमम् ।। ३४१ ।।

धर्माणां कर्मणां त्रय्या द्रष्टा योऽस्ति सनातनः ।
योगज्ञानतपोनिष्ठः पुरार्णषिः स मे गतिः ।। ३४२ ।।

परा काष्ठा तपोज्ञानयोगैश्वर्यादिसम्पदाम् ।
योऽस्ति निष्ठावतां निष्ठा स सन्निष्ठां ददातु मे ।। ३४३ ।।

शान्त्यानन्दोऽखिलानन्दविजयेनोपरिस्थितः ।
सा शान्तिर्यत्स्वरूपास्ति स्वान्तं शान्तं स मे क्रियात् ।। ३४४ ।।

पिता माता भ्रातरश्च सुहृदो वापि दुर्बलाः ।
विमुखा यत्र यान्त्येते तत्रासि त्वं परायणम् ॥ ३४५ ॥

शिवत्रिशूलविध्वंसी श्रीकण्ठैकवरप्रदः ।
नरः कृष्णो हरिर्धर्मनन्दनो धर्मजीवनः ॥ ५२ ॥

शिवेन क्षिप्तं यः शूलं कुण्ठितं कृतवान्प्रभुः ।
शिवत्रिशूलविध्वंसी मद्वृच्छूलं हताद्धरिः ॥ ३४६ ॥

कपालमोचनवरं श्रीकण्ठाय ददावृषिः ।
तत्र तुष्टोऽस्तु मे तुष्टः श्रीकण्ठैकवरप्रदः ॥ ३४७ ॥

द्वितीयोऽभूत्तपः सक्तो नरो धर्मात्मजोऽर्जुनः ।
भूत्वा व्यक्षिपद्यः शत्रून्स मे दिश्यात्सदा जयम् ॥ ३४८ ॥

नारायणस्यावतारः कृष्णो वृजिन कर्षणः ।
*भूभारहृद्भव्यकर्मा श्यामो रूपेण कामजित् ॥ ३४९ ॥

अनन्तजन्मसंचाराघौघमुक्तिकरो हरिः ।
स्मरणादेव सद्यो यो हरत्येवाखिलापदः ॥ ३५० ॥

धर्माख्यस्य पितुर्हार्दाधार आह्लादकश्च यः ।
धर्मनिष्ठाप्रदत्वाद्वा तुष्यान्मे धर्मनन्दनः ॥ ३५१ ॥

धर्मोपदेष्टा धर्मद्विट्-नाशको धर्मवर्धनः ।
धर्मसंस्थापनायैवावतीर्णो धर्मजीवनः ॥ ३५२ ॥

---

*भव्यमूर्त्तिरित्यपि पाठः ।

आदिकर्ता सर्वसत्यः सर्वस्त्रीरत्नदर्पहा ।
त्रिकालजितकन्दर्प उर्वशीसृङ्मुनीश्वरः ॥ ५३ ॥

लीनं धर्मं जगच्चापि पुनरुज्जीवयंस्तथा ।
उत्पादयंश्चादिकर्ता प्रीयतां विश्वजीवनः ॥ ३५३ ॥

सत्यात्मा सत्यसंकल्पः सत्यकामश्च सद्वपुः ।
सर्वसत्यः परो विष्णुः सत्यसन्धं करोतु माम् ॥ ३५४ ॥

अक्षरत्वादच्युतत्वात्सर्वेश्याहङ्कृतिं पराम् ।
चूर्णीचकाराविकृतः सर्वस्त्रीरत्नदर्पहा ॥ ३५५ ॥

पूर्णकामश्चात्मलाभसन्तुष्टः कामदर्पकृत् ।
त्रिकालजितकन्दर्पः स्मरारीष्टोऽस्तु कामधुक् ॥ ३५६ ॥

तपोविघ्नेन्द्रनिर्दिष्टकन्दर्पाप्सरसां तदा ।
प्रतिक्षोभायोरुदेशादुर्वशीसृक् स तुष्यतात् ॥ ३५७ ॥

स्वरूपध्यानमननासक्तस्वान्तवतां प्रभुः ।
मुनीश्वरः स मामव्यान्नरनारायणाभिधः ॥ ३५८ ॥

आद्यः कविर्हयग्रीवः सर्ववागीश्वरेश्वरः ।
सर्वदेवमयो ब्रह्मगुरुर्वागीश्वरीपतिः ॥ ५४ ॥

आद्यः सर्वावताराणामुपदेष्टाद्य एव वा ।
निःश्वासाविष्कृताम्नायो वेदविज्ञः स तुष्यतु ॥ ३५९ ॥

प्रभवत्वाच्छ्रुतीनां यः कविर्वाक्रान्तदर्शनः ।
कवित्वशक्तिदः काव्यकीर्तिं यच्छत्वभीष्टदः ॥ ३६० ॥

*हयग्रीवोऽवतारोऽयमलौकिकवपुर्धरः ।
वेदधर्मप्रचारेण देवान्साधून् बभार यः ॥ ३६१ ॥

ब्रह्माद्यखिलदेवेशप्रभुरार्तार्तिनाशनः ।
अनाथस्यास्तु मे नाथः सर्ववागीश्वरेश्वरः ॥ ३६२ ॥

याज्ञं वपुर्धृतवतो यज्ञभागभुजोऽखिलाः ।
मूर्तिमाश्रित्य तिष्ठन्ति सर्वदेवमयोऽस्त्यतः ॥ ३६३ ॥

वेदोपदेष्टृत्वहेतोर्योऽस्ति ब्रह्मगुरुः परः ।
स गुरूणां गुरुर्विद्वान् ममापि ज्ञानदो गुरुः ॥ ३६४ ॥

अवतारानुरूप्येण योऽत्र वागीश्वरीपतिः ।
स वागीश्याः प्रसादस्य पात्रं मां कुरुतात्सदा ॥ ३६५ ॥

अनन्तविद्याप्रभवो मूलाविद्याविनाशकः ।
सार्वज्ञ्यदो जगज्जाड्यनाशको मधुसूदनः ॥ ५५ ॥

न केवलं वेदविद्याप्रभवो वाङ्मयीपतिः ।
अनन्तविद्याप्रभवो विद्यापात्रं करोतु माम् ॥ ३६६ ॥

भवोपादानभूतां यो भक्ताविद्यां छिनत्त्यजः ।
ममाप्यविद्यां स छिन्द्यान्मूलाविद्याविनाशकः ॥ ३६७ ॥

सगुणोपासनासक्तमनसां तन्मयात्मनाम् ।
सार्वज्ञ्यदः स सर्वज्ञभावं यच्छत्वनाबिलम् ॥ ३६८ ॥

अशेषज्ञानसम्पत्तिनिदानं स धियां पतिः ।
ह्रियाज्जाड्यं जगज्जाड्यनाशकोऽज्ञाननाशनः ॥ ३६९ ॥

---

*हयग्रीवोऽवतारेष्वाद्यः ।

मध्वाख्यदैत्यहन्तृत्वाद्यमाहुर्मधुसूदनम् ।
दैत्यदानवरक्षोभ्यो रक्षन्तं तं प्रणौम्यहम् ॥ ३७० ॥

अनेकमन्त्रकोटीशः शब्दब्रह्मैकपारगः ।
आदिविद्वान्वेदकर्ता वेदात्मा श्रुतिसागरः ॥ ५६ ॥

मन्त्राणामधिदेवत्वात्स्वारूप्यात्फलदत्वतः ।
अनेकमन्त्रकोटीशो मन्त्रसिद्धिं ददातु मे ॥ ३७१ ॥

एक एवाशेषवेदज्ञातृत्वात्तस्य पारगः ।
तज्ज्ञानदो ममाप्यस्तु शब्दब्रह्मैकपारगः ॥ ३७२ ॥

विद्वद्वृंदुष्यदानैकप्रबणस्त्वं गिरां पतिः ।
आदिविद्वांस्त्वमेवैको विश्वसृड्वेददो बुधः ॥ ३७३ ॥

वेदानां सम्प्रदायस्य त्वमेवासि प्रचारकः ।
अकर्तृकत्वेऽपि वेदकर्तेति गीयसे बुधैः ॥ ३७४ ॥

वेदात्मासि प्रभो तेऽस्ति शब्दब्रह्मात्मकं वपुः ।
तत्सारैस्त्वं महावाक्यैरैक्यज्ञानं प्रयच्छ मे ॥ ३७५ ॥

आधेयानां श्रुतीनां योऽखिलानां श्रुतिसागरः ।
आधार एक एवायमब्धिरिव स चिन्मयः ॥ ३७६ ॥

ब्रह्मार्थवेदाहरणः सर्वविज्ञानजन्मभूः ।
विद्याराजो ज्ञानमूर्तिर्ज्ञानसिन्धुरखण्डधीः ॥ ५७ ॥

आनीतवान्मत्स्यरूपो ब्रह्मणो वदनच्युतान् ।
ब्रह्मार्थवेदाहरणो वेदान्वेदविदुत्तमः ॥ ३७७ ॥

वेदाधीनाखिलज्ञानप्रभवः प्रभुरेव सः ।
वेदविन्मे प्रसन्नोऽस्तु सर्वविज्ञानजन्मभूः ॥ ३७८ ॥

राजतेऽशेषविद्याभिर्विद्यानां पालकोऽथवा ।
विद्याराजः स मां वेदविद्याराजं क्रियाद्विभुः ॥ ३७९ ॥

पारमार्थिकरूपं ते ज्ञानमेवानवद्यकम् ।
ज्ञानमूर्त्ते हरे ब्रह्मन् मुक्तयै ज्ञानं प्रयच्छ मे ॥ ३८० ॥

ज्ञानसिन्धुस्त्वमेवासि दयासिन्धो दयस्व माम् ।
त्वत् ज्ञानमेव संसारपारावारसुतारकम् ॥ ३८१ ॥

अखण्डधीर्देशकालाद्यनवच्छिन्नधीधरः ।
धियां नाथश्चोदकश्च धियं दत्तात्सुनिर्मलाम् ॥ ३८२ ॥

**मत्स्यदेवो महाश्रृङ्गो जगद्बीजबहित्रधृत् ।**
**लीलाव्याप्ताखिलाम्भोधिश्चतुर्वेदप्रवर्तकः ॥ ५८ ॥**

अखण्डलयलीलास्ता दर्शयंस्तान्मुनीश्वरान् ।
*शल्कसीमविलीनाब्धिर्मत्स्यदेवः स सद्गतिः ॥ ३८३ ॥

महाश्रृङ्गो वहन्नौकां सह मन्वादिभिस्तदा ।
श्रृङ्गेण महताम्भोधौ चिक्रीड परया मुदा ॥ ३८४ ॥

जगद्बीजैः पूर्णनावं वोढ्वा मत्स्यश्चचार सः ।
चारयंश्च मुनीनब्धौ जगद्बीजबहित्रधृत् ॥ ३८५ ॥

लयसंभिन्नसप्ताब्धिव्याप्तिलीलाधरोऽभयः ।
लीलाव्याप्ताखिलाम्भोधिर्भवाब्धितारकोऽस्तु मे ॥ ३८६ ॥

---

*सीमान्तर्हिताब्धिरिति च पाठः ।

हत्वा शङ्खं तेन नीतान्वेदानानीय वेधसे ।
दत्वा प्रवर्तयामास चतुर्वेदप्रवर्तकः ॥ ३८७ ॥

आदिकूर्मोऽखिलाधारस्तृणीकृतजगद्भरः ।
अमरीकृतदेवौघः पीयूषोत्पत्तिकारणम् ॥ ५९ ॥

आदिकूर्मो जगदादिः कूर्माकारं वपुर्वहन् ।
श्रेयसे मेऽस्तु पृष्ठस्थजगन्मण्डलभारभृत् ॥ ३८८ ॥

व्याप्ताया गौरवाक्रान्तपर्वताद्यैर्महत्तमैः ।
आधारोऽत्राखिलाधारोऽनन्ताया मां सदावतात् ॥ ३८९ ॥

तृणवत्तादृशं भारं तृणीकृतजगद्भरः ।
उर्व्या वहंल्लीलयैवाघौघभारार्तितोऽवतात् ॥ ३९० ॥

समुद्रमन्थनोद्भूतामृतेन तर्पयन्सुरान् ।
अमरीकृतदेवौघश्चकारामरनिर्जरान् ॥ ३९१ ॥

न भवेदमृतोत्पत्तिः पीयूषोत्पत्तिकारणम् ।
वैशाखमन्दरावर्तभ्रमिसोढा न चेद्धरिः ॥ ३९२ ॥

आत्माधारो धराधारो यज्ञाङ्गो धरणीधरः ।
हिरण्याक्षहरः पृथ्वीपतिः श्राद्धादिकल्पकः ॥ ६० ॥

अन्याश्रयविहीनो यः स्वे महिम्नि प्रतिष्ठितः ।
आत्माधाराय तस्मै ते प्रणामाः सन्तु कोटिशः ॥ ३९३ ॥

धरा धर्तुं भरं भारं कथं शक्ता भवेन्न चेत् ।
तिष्ठेत्स्वस्थो धराधारोऽखिलधीरधुरन्धरः ॥ ३९४ ॥

ब्रह्मार्पणं ब्रह्महविरित्याद्युक्तनयेन यः ।
यज्ञाङ्गः सर्वयज्ञानां धर्ता तुष्टोऽस्तु मे हरिः ॥ ३९५ ॥

प्रलयार्णवमग्नोर्वीं लीलयैवोद्धार यः ।
स भवार्णवमग्नानामुद्धर्ता धरणीधरः ॥ ३९६ ॥

अत्र हिरण्याक्षहरोऽसुरं तं हतवान्हरिः ।
देवान्साधून्धर्मसेतून् बभार करुणानिधिः ॥ ३९७ ॥

अत एव प्रभुः पृथ्वीपतिस्तामुद्वहन्धराम् ।
मायामयाब्धौ मज्जन्तं मामुद्धरतु मायिकः ॥ ३९८ ॥

वपुरुद्धूननाज्जातमृत्पिण्डपिण्डकल्पनैः ।
स्वरोमदर्भास्तरणे सृष्टौ श्राद्धादिकल्पकः ॥ ३९९ ॥

**समस्तपितृभीतिघ्नः समस्तपितृजीवनः ।**
**हव्यकव्यैकभुग्घव्यकव्यैकफलदायकः ॥ ६१ ॥**

रक्षोभ्योऽखिलपितॄणां स्वधोच्छेदभियं हरन् ।
सम्स्तपितृभीतिघ्नो ममास्तु पितृमुक्तिदः ॥ ४०० ॥

पञ्चमशतारम्भः

स्वधाप्रचारकत्वेन श्राद्धेषु तर्पणादिना ।
वैकुण्ठ एक एवास्ति समस्तपितृजीवनः ॥ ४०१ ॥

देवदेयं पितृदेयं भुंक्ते यश्चोभयात्मकः ।
हव्यकव्यैकभुक् (नामद्वयं) विष्णुः सन्तुष्टोऽस्तु सदा मम ॥ ४०२ ॥
॥ ४०३ ॥

एक एवास्ति यष्ट्रे यः फलदो हव्यकव्ययोः ।
सोऽस्तु मे शरणं हव्यकव्यैकफलदायकः ॥ ४०४, ४०५ ॥

रोमान्तर्लीनजलधिः क्षोभिताशेषसागरः ।
महावराहो यज्ञघ्नध्वंसनो याज्ञिकाश्रयः ॥ ६२ ॥

रोमस्वन्तः स कल्पाब्धिर्लीनो यस्य महीयसः ।
रोमान्तर्लीन्जलधिः सोऽव्यान्महावपुर्धरः ॥ ४०६ ॥
धरोद्धरणतो येन क्षोभिता ऐक्यमागताः ।
सप्ताब्धयः स मामव्यात् क्षोभिताशेषसागरः ॥ ४०७ ॥

अलौकिकमहाश्चर्यकारिसूकरमूर्तिधृत् ।
महावराहो विश्वात्मा योऽस्ति तस्मै नमो नमः ॥ ४०८ ॥

यज्ञान्तरायकर्तॄणां समूलोन्मूलनक्षमः ।
यज्ञघ्नध्वंसनो ध्वस्यान्ममारिषट्कमच्युतः ॥ ४०९ ॥
याज्ञिकाश्रय एवासौ यज्ञकृत्सत्फलावहः ।
यज्ञेश्वरो यज्ञभुजां देवानां परमाश्रयः ॥ ४१० ॥

नरसिंहो दिव्यसिंहः सर्वानिष्टार्तिदुःखहा* ।
एकवीरोऽद्भुतबलो यन्त्रमन्त्रैकभञ्जनः ॥ ६३ ॥

नारं सैंहं वपुर्धृत्वा मायेशो मायिकोत्तमः ।
नरसिंहश्चित्ररूपो योऽस्ति तस्मै नमो नमः ॥ ४११ ॥
दिव्यसिंहो भक्तसिंहप्रह्लादार्तिभयापहः ।
सटाच्छटोद्धूतकाष्टो दुर्दर्शो दिविजैरपि ॥ ४१२ ॥

---

*सर्वारिष्टार्तिदुःखहा—इति च पाठः ।

सर्वानिष्टोत्थितामार्तिमाधिं स्मृत्यैव यो हरिः ।
भक्तानां हन्ति तुष्टोऽस्तु सर्वानिष्टार्तिदुःखहा ॥ ४१३ ॥

सर्वातिशायिवीर्येण सहसाखिलवीरजित् ।
एकवीरो भक्तवीर्यवर्धकोऽस्त्वभयावहः ॥ ४१४ ॥

अत्याश्चर्यकार्यकारिब्रह्मादीनामपीश्वरः ।
योऽस्त्यद्भुतोऽद्भुतबलस्तस्मात्त्राणं किमद्भुतम् ॥ ४१५ ॥

द्विषत्प्रयुक्तमन्त्रास्त्रभंजने शक्तिमानसौ ।
एको भज्याद्द्विषत्कृत्यां यन्त्रमन्त्रैकभंजनः ॥ ४१६ ॥

**ब्रह्मादिदुःसहज्योतिर्युगान्ताग्न्यतिभीषणः ।**
**कोटिवज्राधिकनखो जगद्दुष्प्रेक्ष्यमूर्तिधृत् ॥ ६४ ॥**

ब्रह्मादिदुःसहज्योतिरपि भक्तहृदां सदा ।
तापं हरति योऽसंख्यसुधांश्वाह्लाददायकः ॥ ४१७ ॥

संवर्तानलदुर्धर्षो युगान्ताग्न्यतिभीषणः ।
ह्रियात्स महतीं भीतिं मम भक्ताभयङ्करः ॥ ४१८ ॥

वज्रात्कोटिगुणास्तीक्ष्णा नखा यस्यातिभीतिदाः ।
कोटिवज्राधिकनखश्छिद्याद्द्विषदुरःस्थलम् ॥ ४१९ ॥

सर्वैरशक्यो द्रष्टुं यो जगद्दुष्प्रेक्ष्यमूर्तिधृत् ।
गृह्णन्मूर्तिं भीषणां स मम मथ्नातु शात्रवान् ॥ ४२० ॥

**मातृचक्रप्रमथनो महामातृगणेश्वरः ।**
**अचिन्त्यामोघवीर्याढ्यः समस्तासुरघस्मरः ॥ ६५ ॥**

एकस्मात्कारणान्मातृचक्राक्रान्तं शिवेश्वरम् ।
मातृचक्रप्रमथनो नृसिंहोऽयं ररक्षताम् ॥ ४२१ ॥

महामातृगणस्येष्टे महामातृगणेश्वरः ।
यः, स तस्मात्सदा पायादतिक्रुद्धाद्भयङ्करात् ॥ ४२२ ॥

मनोतीतेन साफल्यवता वीर्येण सम्भृतः ।
अचिन्त्यामोघवीर्याढ्यः क्रियान्मां वीर्यवत्तमम् ॥ ४२३ ॥

असुरान्दानवान्दैत्यानशेषानत्ति यो हरिः ।
स साधूनव्याद्भक्तांश्च समस्तासुरघस्मरः ॥ ४२४ ॥

हिरण्यकशिपुच्छेदी कालसङ्कर्षिणीपतिः ।
कृतान्तवाहनः सद्यः समस्तभयनाशनः ॥ ६६ ॥

नखैर्विदारयन्दैत्यं प्रह्लादं नन्दयन्दृशा ।
हिरण्यकशिपुच्छेदी मां भयाद्रक्षाताद्धरिः ॥ ४२५ ॥

कालापरिच्छेद्यरूपनारसिंह्याख्यशक्तिभृत् ।
श्रीनृसिंहः सदाव्यान्मां कालसंकर्षणीपतिः ॥ ४२६ ॥

वाहनमिव यद्वश्यः कृतान्तोऽपि सदा स्थितः ।
कृतान्तवाहनोऽव्यान्मां कृतान्तपाशसङ्कटात् ॥ ४२७ ॥

यद्दिव्यदेहस्मरणादेव सद्यो विलीयते ।
भयौघः स्तौमि तं सद्यः समस्तभयनाशनम् ॥ ४२८ ॥

सर्वविघ्नान्तकः सर्वसिद्धिदः सर्वपूरकः ।
समस्तपातकध्वंसी सिद्धमन्त्राधिकाह्वयः ॥ ६७ ॥

कार्योपक्रमविघ्नानां सर्वेषां नाशकृद्धरिः ।
सर्वविघ्नान्तकः सोऽस्तु मन्मुक्तिविघ्नहारकः ॥ ४२९ ॥

या भूमौ च द्युलोके च दुर्लभा सिद्धिरुत्तमा ।
तां सर्वसिद्धिदो मह्यं दिश्याद्भक्तेष्टदो हरिः ॥ ४३० ॥

सर्वैः कामैः पूरयन्यो भक्तान्भक्तेष्टपूरकः ।
अनूनं कुर्वन्नूनं च तुष्यात्स सर्वपूरकः ॥ ४३१ ॥

भक्तदुष्कृतसंघातं दहन्यस्तूलराशिवत् ।
समस्तपातकध्वंसी सोऽव्यात्पातकराशितः ॥ ४३२ ॥

सिद्धमन्त्रवदाह्वानमाधिक्येनेष्टदं हरेः ।
यस्य, तुष्यात्स मे विष्णुः सिद्धमन्त्राधिकाह्वयः ॥ ४३३ ॥

भैरवेशो हरार्तिघ्नः कालकोटिदुरासदः ।
दैत्यगर्भस्राविनामा स्फुटद्ब्रह्माण्डगर्जितः ॥ ६८ ॥

भैरवाणां नियन्ता यस्तद्दर्पनाशकश्च यः ।
भैरवेशः स्वभक्तानां भियं हन्तु स कालजाम् ॥ ४३४ ॥

मातृचक्रेण जनितां हरार्ति योऽहरद्धरिः ।
हरार्तिघ्नो ममार्ति च ह्रियाद्भक्तार्तिनाशनः ॥ ४३५ ॥

एकोऽपि दुःसहः कालः सर्वेषां बलिनामपि ।
किं वाच्यं तत्र यो भीष्मः कालकोटिदुरासदः ॥ ४३६ ॥

जायते यन्नाममात्राद्दैत्यस्त्रीगर्भविच्युतिः ।
दैत्यगर्भस्राविनामा सोऽव्यान्मामापदां भयात् ॥ ४३७ ॥

ब्रह्माण्डस्य विदीर्णस्य ध्वनिवद्ध्वनिरुल्वणः ।
यस्यातिभीमस्याव्यात्स स्फुटद्ब्रह्माण्डगर्जितः ॥ ४३८ ॥

स्मृतमात्राखिलत्राताऽद्भुतरूपो महाहरिः ।
ब्रह्मचर्मशिरः पट्टी दिक्पालोर्ध्वाङ्गभूषणः ॥ ६९ ॥

स्मृतमात्राखिलत्राता स्मृत्यैवाप्यखिलं जगत् ।
त्रायते यः स मे त्राणतत्परोऽस्तु सदा हरिः ॥ ४३९ ॥

नरसिंहात्मकं रूपमत्याश्चर्यकरं परम् ।
हरेर्यस्य स मे त्राताद्भुतरूपोऽस्तु मे प्रभुः ॥ ४४० ॥

यो हरिभ्यो लौकिकेभ्योऽलौकिकोऽग्रयो महाहरिः ।
अथवा यो महाविष्णुर्जगत्कर्ता स मे गतिः ॥ ४४१ ॥

जगतामुपसंहारे त्वगुष्णीषधरो विधेः ।
ब्रह्मचर्मशिरः पट्टी स मां पायादपायतः ॥ ४४२ ॥

कल्पान्तकाले दिक्पालशिरोभूषणभूषितः ।
भयानको भयाद्रक्ष्याद्दिक्पालोर्ध्वाङ्गभूषणः ॥ ४४३ ॥

द्वादशार्कशिरोदामा रुद्रशीर्षैकनूपुरः ।
योगिनीत्रस्तगिरिजात्राता भैरवतर्जकः ॥ ७० ॥

मासाध्यक्षद्वादशार्कशिरोमालात्यलङ्कृतः ।
द्वादशार्कशिरोदामा सर्वापद्भ्यः सदावतात् ॥ ४४४ ॥

यस्यैकचरणं रुद्रशीर्षमण्डनमण्डितम् ।
स के निधत्तात्पादं मे रुद्रशीर्षैकनूपुरः ॥ ४४५ ॥

मातृचक्रभयात्तत्रे गिरिजां यो हरिः पुराः ।
योगिनीत्रस्तगिरिजात्राता मां त्रायतां भयात् ॥ ४४६ ॥

योऽतर्जयन्महोग्राणां भैरवाणां गणं हरिः ।
आश्लिष्टोऽत्युग्रया शक्त्या तुष्याद्भैरवतर्जकः ॥ ४४७ ॥

वीरचक्रेश्वरोऽत्युग्रो यमारिः कालशम्बरः ।
क्रोधेश्वरो रुद्रचण्डीपरिवारादिदुष्टभुक् ॥ ७१ ॥

अशेषवीरचक्रस्य नियन्तानुपमोल्बणः ।
वीरचक्रेश्वरो वीरान्हिनस्तु मम वैरिणः ॥ ४४८ ॥

असतां योऽत्युग्ररूपः सौम्यमूर्तिः सदा सताम् ।
स मेऽत्युग्रोऽस्तूग्रशक्तिशत्रुशासनतत्परः ॥ ४४९ ॥

यमाद्भयं नास्ति यस्य भक्तानां वा यमाहितः ।
यमारिः स सदा च्छिंद्याद्यमस्य महतीं भियम् ॥ ४५० ॥

यद्भक्तानां स्वरूपाप्त्या कालकक्ष्या न काचन ।
कालो वा शम्बरस्यास्ति सोऽव्यान्मां कालशम्बरः ॥ ४५१ ॥

क्रोधस्य वश्यो यो नास्ति तन्नियन्ता च यो हरिः ।
क्रोधेश्वरो द्विषत्क्रोधाभिभूतं रक्षतात्स माम् ॥ ४५२ ॥

दुष्टात्मनः प्रमथादीन् डाकिन्यादीश्च दुःस्थितीः ।
यो भुंक्ते स रुद्रचण्डीपरिवारादिदुष्टभुक् ॥ ४५३ ॥

सर्वाक्षोभ्यो मृत्युमृत्युः कालमृत्युनिवर्तकः ।
असाध्यसर्वरोगघ्नः सर्वदुर्ग्रहसौम्यकृत् ॥ ७२ ॥

सर्वैरतिबलैर्दैत्यैर्देवैरुद्धतकर्मभिः ।
अक्षोभ्यश्चाप्रधृष्यश्च सर्वाक्षोभ्योऽवतात्स माम् ॥ ४५४ ॥

त्रिजगन्मारणक्षुब्धक्रुद्धमृत्योर्भयङ्करः ।
मृत्युर्यो मृत्युमृत्युर्मां रक्ष्यात्स मृत्युनार्दितम् ॥ ४५५ ॥

सर्वकार्य परिच्छेत्तुः कालस्यान्तविनाशकः ।
यः स मृत्युभयाद्रक्ष्यात्कालमृत्युनिवर्तकः ॥ ४५६ ॥

यो रोगानचिकित्स्यांश्च सर्वान्हन्ति स्मृत्यैव सः ।
असाध्यसर्वरोगघ्नो रक्ष्याद्रोगैरुपद्रुतम् ॥ ४५७ ॥

यन्नामरूपस्मरणात्सद्यः क्रूरग्रहाः शुभाः ।
भवन्ति, दुर्ग्रहं माव्यात्सर्वदुर्ग्रहसौम्यकृत् ॥ ४५८ ॥

गणेशकोटिदर्पघ्नो दुःसहाशेषगोत्रहा ।
देवदानवदुर्दर्शो जगद्भयदभीषणः ॥ ७३ ॥

भक्तसत्कर्मसाध्येष्टफलदानाय विश्रुतः ।
गणेशकोटिदर्पघ्नो भूयाद्विघ्नविनाशकः ॥ ४५९ ॥

स्मृत एवाशु यो यक्ष्मगोत्रं हन्ति सुमंगलः ।
सोऽस्तु मेऽसाध्यरोगघ्नो दुःसहाशेषगोत्रहा ॥ ४६० ॥

भक्तित्यक्तासुराज्ञेयो देवादृश्योऽतिभीषणः ।
देवदानवदुर्दर्शो मम भूयात्सुदर्शनः ॥ ४६१ ॥

जगतोऽनिष्टसक्तानां सौम्योऽप्यतिभयंकरः ।
क्रुद्धकालभयंकृत्याज्जगद्भयदभीषणः ॥ ४६२ ॥

समस्तदुर्गतित्राता जगद्भक्षकभक्षकः ।
उग्रेशोऽम्बरमार्जारः कालमूषकभक्षकः ॥ ७४ ॥

दुष्कृतानां तदुत्पन्नापदां चोत्पातदुःस्थितेः ।
समस्तदुर्गतित्राता समूलोन्मूलनक्षमः ॥ ४६३ ॥

विश्वोपद्रवकर्तॄणां बुभुक्षुरिव भक्षकः ।
दुर्भिक्षभक्षको भूयाज्जगद्भक्षकभक्षकः ॥ ४६४ ॥

क्रूरकर्मसमासक्तस्वान्तानां यो नियामकः ।
शिवेष्टो वा सदा भूयादुग्रेश उग्रपापहा ॥ ४६५ ॥

अमूर्तः सन् व्यापकश्चाकाशवच्चौतुधर्मकः ।
हरिरम्बरमार्जारः कालाखुभक्षणे रतः ॥ ४६६ ॥

खवद्योऽस्त्यपरिच्छेद्यः कालाकल्योऽत एव सः ।
आखोरिवौतुर्भगवान् कालमूषकभक्षकः ॥ ४६७ ॥

अनन्तायुधदोर्दण्डो नृसिंहो वीरभद्रजित् ।
योगिनीचक्रगुह्येशः शक्रारिपशुमांसभुक् ॥ ७५ ॥

चक्राद्यनन्तायुधधृद्दोर्दण्डो द्विट् भयावहः ।
अनन्तायुधदोर्दण्डो नृसिंहोऽस्तु जयप्रदः ॥ ४६८ ॥

नृसिंहावयवारब्धदेहो वा नृषु सत्तमः ।
नृसिंहो मय्यपि स्निग्धो भूयाद्दृष्टया कृपार्द्रया ॥ ४६९ ॥

वीरभद्राह्वयं रुद्रगणं यो जितवान्हरिः ।

प्राप्तभद्रं वीर्यवन्तं क्रियान्मां वीरभद्रजित् ॥ ४७० ॥

यो योगिनीचक्रगुह्याभिलाषस्य नियामकः ।
योगिनीचक्रगुह्येशो ममास्त्वभयदायकः ॥ ४७१ ॥

पशुभोजी यथा सिंहः शक्रारींस्तांस्तथासुरान् ।
भुङ्क्ते यः, स सदाव्यान्मां शक्रारिपशुमांसभुक् ॥ ४७२ ॥

रुद्रो नारायणो मेषरूपशङ्करवाहनः ।
मेषरूपशिवत्राता दुष्टशक्तिसहस्रभुक् ॥ ७६ ॥

विपक्षान् रोदयन् रुद्रो नादेन द्रावयन्परान् ।
दानवान्यो महावीरान् स मे तुष्यात्सतां गतिः ॥ ४७३ ॥

न्यायस्य प्राप्तिहेतुत्वान्नारायण* इति स्मृतः ।
दीनानाथैकशरणं प्रपन्नं मां सदावतात् ॥ ४७४ ॥

निर्माय शङ्करो मेषरूपं वाहनतां गतः ।
नृसिंहस्य, प्रपन्नं तं मातृचक्रार्दितं हरिः ॥ ४७५ ॥

तत्र तदेति यो मेषरूपशङ्करवाहनः ।
मेषरूपशिवत्राता बभूवास्तु स मे गतिः ॥ ४७६ ॥ (युग्मम्)

दुष्टं तच्छक्तिचक्रं यो दुष्टानां वा सहस्रशः ।
शक्तीरत्ति स मामव्याद्दुष्टशक्तिसहस्रभुक् ॥ ४७७ ॥

---

*नृ नये इति धातोः ।

तुलसीवल्लभो वीरो वामाचारोऽखिलेष्टदः ।
महाशिवः शिवारूढो भैरवैककपालभृत् ॥ ७७ ॥

तुलसी वल्लभा यस्य तुलस्यर्चनवल्लभः ।
दिश्यात्तदर्चानिष्ठां स तुलसीवल्लभो हरिः ॥ ४७८ ॥

रीत्या विविधया योऽरीन्भक्तानां कम्पयन्हरिः ।
वीरः स मां वीरशत्रुमहाभीतेः सदावतात् ॥ ४७९ ॥

भक्ताभीष्टप्रदोऽभक्तध्वंसको योऽच्युतः प्रभुः ।
वामाचारोऽवमं वामं मामव्यात्करुणाकरः ॥ ४८० ॥

भक्तेभ्यः सकलाभीष्टार्पणानारततत्परः ।
स्वीयाङ्घ्रिभक्ति मे पूर्णां देयान्नाथोऽखिलेष्टदः ॥ ४८१ ॥

स्वात्त्विकत्वात्प्रशान्तात्मा यद्वानन्दमहानिधिः ।
महाशिवोऽस्तु भव्याय शिवाद्वाप्युत्तमः शिवः ॥ ४८२ ॥

शिवत्राणाय तं मेषमूर्तिमारूढवान्हरिः ।
शिवारूढः शिवायास्तु सदाप्तानन्दनिर्भरः ॥ ४८३ ॥

संवर्ते लीनशक्तेर्यो भैरवस्य शिरोधरः ।
न्यस्ताङ्घ्रिरस्तु मे मूर्ध्नि भैरवैककपालभृत् ॥ ४८४ ॥

झिल्लीचक्रेश्वरः शक्रदिव्यमोहनरूपदः ।
गौरीसौभाग्यदो मायानिधिर्मायाभयापहः ॥ ७८ ॥

अरण्यवासिमातृणां चक्रस्य यो नियामकः ।
झिल्लीचक्रेश्वरः पायादपायान्मां सदापदाम् ॥ ४८५ ॥

गौतमर्षिशापदग्धशक्राय दिव्यमोहनम् ।
रूपं ददौ हरिः शक्रदिव्यमोहनरूपदः ॥ ४८६ ॥

मातृचक्रप्रेरणाभिर्गौरीं दौर्भाग्ययन्त्रिताम् ।
गौरीसौभाग्यदश्चक्रे सौभाग्यालंकृतां पुनः ॥ ४८७ ॥

जगत्कारणभूताया मायाया आश्रयः परः ।
मायानिधिः स मायेशो मायाग्रस्तं स मावतात् ॥ ४८८ ॥

मायाभयापहो मायासिन्धुमग्नं सदापदाम् ।
आस्पदं मां विपद्ग्रस्तं रक्षतात्करुणानिधिः ॥ ४८९ ॥

**ब्रह्मतेजोमयो ब्रह्मश्रीमयश्च त्रयीमयः ।**
**सुब्रह्मण्यो बलिध्वंसी वामनोऽदितिदुःखहा ॥ ७९ ॥**

ब्रह्मतेजोमयायास्तु वामनाय नमो नमः ।
यन्मूर्तिः सन्ततं भाति ब्रह्मवर्चसशालिनी ॥ ४९० ॥

ब्राह्म्या लक्ष्म्या नित्यपूर्णो ब्रह्मश्रीमय ईश्वरः ।
द्विजाग्र्यमूर्त्या त्रिजगन्मोहनोऽव्यात्सदापदः ॥ ४९१ ॥

त्रयीमयस्तदुद्धर्ता त्रयीप्रचारकः परः ।
यन्निःश्वासस्त्रयी देवी स पूतात्मा पुनातु माम् ॥ ४९२ ॥

ब्रह्मत्वेन सुराराध्यवरिष्ठो वा बलेर्मखे ।
ब्रह्मेव सोऽस्तु मे भूत्यै सुब्रह्मण्योऽमरातिहा ॥ ४९३ ॥

येनाच्युतेन स बलिश्च्यावितस्तत्क्षणात्पराात् ।
राज्यात्सोऽस्तु बलिध्वंसी ममापीष्टप्रदो विभुः ॥ ४९४ ॥

राज्यं त्रिलोक्या यद्गीर्णं बलिनामरशत्रुणा ।
तद्वामयंस्तं छलतो वामनो मां सदावतात् ॥ ४९५ ॥

देवमातुर्देवराज्यहरणोत्थान्यनेकशः ।
दुःखानि नाशयन्मेऽस्तु श्रेयसेऽदितिदुःखहा ॥ ४९६ ॥

उपेन्द्रो नृपतिर्विष्णुः कश्यपान्वयमण्डनम् ।
बलिस्वाराज्यदः सर्वदेवविप्रान्नदोऽच्युतः ॥ ८० ॥

इन्द्रादप्यधिकैश्वर्यशाली वेन्द्रसमीपगः ।
सदोपेन्द्रः स मे दिश्याच्छ्रियमैन्द्रीं सदातनीम् ॥ ४९७ ॥

न केवलं दिविषदां नृणामपि पतिः प्रभुः ।
भूमौ वा नृपतेर्मूर्तिर्नृपतिर्मयि तुष्यतात् ॥ ४९८ ॥

त्रिविक्रमस्वरूपेण सार्वात्म्यरूपतोऽपि वा ।
सर्वव्यापी स मे विष्णुरन्ते मेऽस्त्वक्षिगोचरः ॥ ४९९ ॥

कश्यपर्षिकुले प्रादुर्भूय तन्मण्डयन्हरिः ।
भक्तार्तिहास्तु सन्तुष्टः कश्यपान्वयमण्डनम् ॥ ५०० ॥

( षष्ठशतारम्भः )

बलिस्वाराज्यदस्तस्य राज्यं द्यति ददाति वा ।
मन्वन्तरे प्रभुर्योसौ भूयान्निर्वाणदो मम ॥ ५०१ ॥

अशेषदेवविप्रोपयोग्यन्नमसुरैर्हृतम् ।
पुनस्तेभ्यो ददौ सर्वदेवविप्रान्नदो विभुः ॥ ५०२ ॥

यत्रतत्रावतीर्णोऽपि यस्मात्कस्माच्च रूपतः ।
तत्तत्क्रियाणां कर्तापि नाच्युतो च्यवते स्वतः ॥ ५०३ ॥

उरुक्रमस्तीर्थपादस्त्रिपदश्च त्रिविक्रमः ।
व्योमपादः स्वपादाम्भःपवित्रितजगत्त्रयः ॥ ८१ ॥

उरुक्रमो विश्वव्याप्तिं दर्शयन्वामनोऽपि यः ।
दानवान्मोहयंस्तांस्ताञ्श्रेयसेऽस्तु सदा मम ॥ ५०४ ॥

यत्पदुद्दीर्णाण्डवहत्पूताम्भःपावितं जगत् ।
तीर्थपादः पावनाग्र्यो मां पुनातु स वामनः ॥ ५०५ ॥

त्रिभिरेव पदैः क्रान्त्वा त्रिलोकीं त्रिजगत्पतिः ।
त्रिपदश्छलयामास बलिं यः सोऽस्तु मे गतिः ॥ ५०६ ॥

त्रिलोकाक्रमणे ख्याताः क्रमा यस्यासुरद्विषः ।
त्रय एव नमस्तस्मै त्रिविक्रमाय विष्णवे ॥ ५०७ ॥

व्योम्न्येकं पदं यस्यासीत्खव्याप्त्याश्चार्यकृद्विभोः ।
व्योमपादः स सन्तुष्टो मय्यस्त्वदितिनन्दनः ॥ ५०८ ॥

स्वाङ्घ्रिस्पृष्टाम्भसाच्छेन यः पुनाति जगत्त्रयम् ।
प्रसन्नः स्तात्स्वपादाम्भःपवित्रितजगत्त्रयः ॥ ५०९ ॥

ब्रह्मेशाद्यभिवन्द्याङ्घ्रिर्द्रुतधर्माङ्घ्रिधावनः ।
अचिन्त्याद्भुतविस्तारो विश्ववृक्षो महाबलः ॥ ८२ ॥

ब्रह्मेशाद्यभिवन्द्याङ्घ्रिस्तत्तल्लोकाप्त्यनेहसि ।
योऽभूत्स्वःक्रमणे सोऽस्तु मद्धृन्निष्ठपदाम्बुजः ॥ ५१० ॥

द्रवीभूतश्च धर्मोऽयमपां बीजमिति स्मृतम् ।
तेन क्षालितपादोऽसौ द्रुतधर्माङ्घ्रिधावनः ॥ ५११ ॥

यद्विश्वव्याप्तिसत्कीर्तिरचिन्त्याश्चर्यकारिणी ।
अचिन्त्याद्भुतविस्तारः स भूयाद्व्याप्तिदो विभुः ॥ ५१२ ॥

त्रिविक्रमस्वरूपेण जगद्व्याप्त्याऽवनोद्यतः ।
विश्ववृक्षोऽथवा तस्य व्रश्चनाद्द्यतां स माम् ॥ ५१३ ॥

सर्वोत्कृष्टं बलं यस्य दैत्यदानवरक्षसाम् ।
ध्वंसकं, मां सदाव्यात्स सतां भर्ता महाबलः ॥ ५१४ ॥

राहुमूर्धापराङ्गच्छिद्भृगुपत्नीशिरोहरः ।
पापत्रस्तः सदापुण्यो दैत्याशानित्यखण्डनः ॥ ८३ ॥

शिरश्चिच्छेद राहोर्योऽमृतेच्छोश्चक्रतोदयः ।
राहुमूर्धापराङ्गच्छित्क्रियान्मां स्वदयास्पदम् ॥ ५१५ ॥

देवानां हरिभक्तानामनिष्टाचरणे रताम् ।
भृगुपत्नीं चकर्तेशो भृगुपत्नीशिरोहरः ॥ ५१६ ॥

असंगत्वादलेपत्वान्निरहंकारतोऽपि वा ।
अपापोऽप्यत्र स पापत्रस्त आसीदिव प्रभुः ॥ ५१७ ॥

स तत्त्वतः सदापुण्यः पुण्यात्मा पुण्यकीर्तनः ।
प्रकृतेरतिदूरस्थः पापासक्तं पुनातु माम् ॥ ५१८ ॥

कल्पान्ताग्निरिवात्यन्तं दैत्याशाम्भोधिशोषणे ।
भ्रियात्सदा सदाशां स दैत्याशानित्यखण्डनः ॥ ५१९ ॥

पूरिताखिलदेवाशो विश्वार्थैकावतारकृत् ।
स्वमायानित्यगुप्तात्मा भक्तचिन्तामणिः सदा ॥ ८४ ॥

सर्वामराणामाशास्ताः पूरयन्योऽनिशं प्रभुः ।
पूरिताखिलदेवाशः पूर्णाशं मामपि क्रियात् ॥ ५२० ॥

पूर्णकामावतारास्ते विश्वोपकृतये परम् ।
विश्वम्भरः स मामव्याद्विश्वार्थैकावतारकृत् ॥ ५२१ ॥

स्वमायानित्यगुप्तात्मा योषित्सुरादिसंगतः ।
गूहते स्म य आत्मानं दत्तात्रेयं नमामि तम् ॥ ५२२ ॥

भक्तचिन्तामणिर्भक्ताशेषाभीष्टप्रपूरणात् ।
जितकल्पतरुर्दिश्यान्मह्यमिष्टं स माधवः ॥ ५२३ ॥

वरदः कार्तवीर्यादिराजराज्यप्रदोऽनघः ।
विश्वश्लाघ्योऽमिताचारो दत्तात्रेयो मुनीश्वरः ॥ ८५ ॥

वरदानैः सदा भक्तान्स्वे रक्तानाश्रितान्सतः ।
तोषयन्पूरयन्नित्यं सदा वरद ईश्वरः ॥ ५२४ ॥

समस्तराजचक्रस्य चक्रवर्तित्वदो हरिः ।
तुष्टोऽस्तु कार्तवीर्यादिराजराज्यप्रदः प्रभुः ॥ ५२५ ॥

मद्यपानाङ्गनाभोगासक्तोऽपि योऽनघः सदा ।
तत्त्वतोऽसङ्गनिर्लेपानहङ्कारादिभिर्हरिः ॥ ५२६ ॥

विश्वश्लाघ्यो विश्वशस्त्यो विश्वेशो विश्वतोमुखः ।
विश्वोपास्यो विश्वपाता स मे विश्वम्भरो गतिः ॥ ५२७ ॥

श्रुतिभिः स्मृतिभिर्यस्याचारो मातुं न शक्यते ।
तुष्यतान्मेऽमिताचारः सोऽपरिच्छेद्यरूपधृत् ॥ ५२८ ॥

मयात्मा ते पितर्दत्त इत्युक्त्वात्रेः सुतोऽभवत् ।
दत्तात्रेयोऽन्वर्थनाम्ना ख्यातस्तुष्टोऽस्तु मे हरिः ॥५२९ ॥

मननासक्तमनसां मुनीनामपि यः परः ।
तत्त्वोपदेष्टा मामव्याद्भवबन्धान्मुनीश्वरः ॥ ५३० ॥

परशक्तिसदाश्लिष्टो योगानन्दसदोन्मदः ।
समस्तेन्द्रारितेजोहृत्परमामृतपद्मपः ॥ ८६ ॥

यत्र तत्रावतारे यः परशक्त्याश्रितः श्रिया ।
परशक्तिसदाश्लिष्टो मां क्रियात् श्रीदयास्पदम् ॥ ५३१ ॥

चित्तव्यावृत्तियोगेन ब्रह्मानन्दघनोऽच्युतः ।
सदोन्मत्त इवाभाति योगानन्दसदोन्मदः ॥ ५३२ ॥

इन्द्रारीणां समस्तानां दुष्प्रधृष्यौजसामपि ।
समस्तेन्द्रारितेजोहृदोजस्तेजोहरो हरिः ॥ ५३३ ॥

ब्रह्मानन्दसुधापद्ममधुपो मधुसूदनः ।
क्रियान्मां स्वांघ्रिपद्मालिं परमामृतपद्मपः ॥ ५३४ ॥

अनसूयागर्भरत्नं भोगमोक्षसुखप्रदः ।
जमदग्निकुलादित्यो रेणुकाद्भुतशक्तिकृत् ॥ ८७ ॥

भक्त्याराधितमात्रो योऽत्रिपत्न्यै स्वं समर्पयन् ।
अनसूयागर्भरत्नमजोऽपि जनिमाप्तवान् ॥ ५३५ ॥

संभोग ईप्सितार्थानां परत्रेह च नृन्सदा ।
उपैति, येषां सन्तुष्टो हरिर्भोगसुखप्रदः ॥ ५३६ ॥

स्वरूपाप्त्या च भक्तेभ्यः परमानन्दलक्षणम् ।
सुखं दिशत्यनन्तं स विष्णुर्मोक्षसुखप्रदः ॥ ५३७ ॥

जमदग्निकुलादित्यं तद्वंश्यकीर्तिदं प्रभुम् ।
गर्वोद्दृप्ताशेषविराट् समूलोन्मूलनं नुमः ॥ ५३८ ॥

रेणुकायै स्वमात्रे यो दत्तवान् शक्तिमुत्तमाम् ।
देवतात्वं प्रापितायै रेणुकाद्भुतशक्तिकृत् ॥ ५३९ ॥

मातृहत्यादिनिर्लेपः स्कन्दजिद्विप्रराज्यदः ।
सर्वक्षत्रान्तकृद्वीरदर्पहा कार्तवीर्यजित् ॥ ८८ ॥

पित्रादिष्टो मातरं स्वां हतवानप्यसौ प्रभुः ।
मातृहत्यादिनिर्लेपः स्वातंत्र्याज्जीवयंश्च ताम् ॥ ५४० ॥

सतीर्थ्यं स्पर्धमानं यः स्कन्दं चक्रे पराजितम् ।
तस्मै स्कन्दजिते सन्तु प्रणामाः कोटिशो मम ॥ ५४१ ॥

समस्तराजचक्रं यो जित्वा राज्यं ददौ भुवः ।
कश्यपाय द्विजाग्र्याय तुष्यात्स विप्रराज्यदः ॥ ५४२ ॥

समस्तक्षत्रचक्रस्य दृप्तस्यान्तं चकार यः ।
सर्वक्षत्रान्तकृत्क्रुद्धोऽव्यान्मां दृप्तमपीष्टदः ॥ ५४३ ॥

शौर्यवीर्यबलोद्दामदर्पाणां नृपरक्षसाम् ।
रक्तस्नातः स मे वीरदर्पहास्तु सपत्नहा ॥ ५४४ ॥

कार्तवीर्यार्जुनं दर्पदग्धं जित्वा, लुलाव यः ।
तद्बाहुवनमत्युग्रं रक्ष्यान्मां कार्तवीर्यजित् ॥ ५४५ ॥

**सप्तद्वीपवतीदाता शिवाचार्ययशःप्रदः ।**
**भीमः परशुरामश्च शिवाचार्यकविश्वभूः** ** ॥ ८१ ॥**

सप्तद्वीपवतीदाता जम्ब्वादिद्वीपभूषिताम् ।
भुवं ददौ द्विजाग्र्येभ्यो रामः स क्षत्रियान्तकः ॥ ५४६ ॥

स्वयं भाताशेषविद्यः शिवाय गुरुकीर्तिदः ।
जगद्गुरुः स तुष्टोऽस्तु शिवाचार्ययशःप्रदः ॥ ५४७ ॥

भीमोऽतिभीषणोऽशेषक्षत्रियोन्मूलनक्षमः ।
ज्वलत्कालाग्निना तुल्योऽव्यान्मां रामो महाभयात् ॥ ५४८ ॥

रमयन्वा रमन्तेऽत्र भूतानि यः परश्वधम् ।
बिभ्रत् परशुरामः स ममास्तु भवबन्धभित् ॥ ५४९ ॥

आचार्यत्वं शिवस्यासीत् सुफलं यदसावभूत् ।
उपदेश्यो ज्ञानमूर्त्तिः शिवाचार्यकविश्वभूः* ॥ ५५० ॥

**शिवाखिलज्ञानकोशो भीष्माचार्योऽग्निदैवतः ।**
**द्रोणाचार्यगुरुर्विश्वजैत्रधन्वा कृतान्तजित् ॥ ९० ॥**

शिवाखिलज्ञानकोशः प्राप्तज्ञाननिधिः शिवात् ।
यज्ज्ञानकोशो भव्यो वा स रामो मेऽस्तु मुक्तिदः ॥ ५५१ ॥

---

[illegible] ाचार्यैकविश्वभूः– इति च पाठः
*आचार्यकं विद्योपदेशदृत्वमित्यर्थः ।

भीष्माचार्यः स रामो मां पाताद्यस्तं पितामहम् ।
आत्मनोऽप्यर्पणाद्वीरचक्रचूडामणिं व्यधात् ॥ ५५२ ॥

ब्राह्मणत्वादुपास्योऽग्निर्यस्यासीत्सोऽग्निदैवतः ।
रामो मां रमयन्नस्तु स्वस्वरूपप्रकाशनात् ॥ ५५३ ॥

धनुर्वेदोपदेष्टृत्वाद्द्रोणाचार्यगुरुः परः ।
यन्महिम्ना सोऽपि मुख्याचार्यत्वपदवीं दधौ ॥ ५५४ ॥

जगज्जैत्रं धनुर्यस्य दृप्तक्षत्रियघातिनः ।
स विश्वजैत्रधन्वा मे विजयं दिशताद्धरिः ॥ ५५५ ॥

जगज्जेतृयमस्यापि यन्ता यः स कृतान्तजित् ।
स्वेच्छामृत्युस्तपोनिष्ठश्चिरजीव्यस्तु भद्रदः ॥ ५५६ ॥

अद्वितीयतपोमूर्तिर्ब्रह्मचर्यैकदक्षिणः ।
मनुः श्रेष्ठः सताँ सेतुर्महीयान्वृषभो विराट् ॥ ६१ ॥

अद्वितीयतपोमूर्ती रामः स जयतात्प्रभुः ।
अनुत्तरानुत्तमा यन्मूर्तिरस्ति तपोमयी ॥ ५५७ ॥

योगीन्द्रो ब्रह्मचारीशो ब्रह्मचर्यैकदक्षिणः ।
यस्तस्मै वीरभद्राय नमोऽस्तु ख्यातकीर्तये ॥ ५५८ ॥

मर्यादायां स्थापयितुं जगज्जानाति यो मनुः ।
स प्रजापतिरुत्कृष्टस्तस्मै राजर्षये नमः ॥ ५५९ ॥

गुणैरतिप्रशस्यत्वाच्छ्रेष्ठ इत्युच्यते बुधैः ।
राजराजेश्वरत्वाच्च रक्षाद्धर्मधुरन्धरः ॥ ५६० ॥

सतां सेतुः स मर्यादास्थापकः सत्सु सत्तमः ।
आचार्याणां पराकाष्ठास्थितोऽस्तु धर्मदर्शकः ॥ ५६१ ॥

सुधीधीचोदकत्वात्स सन्मार्गस्यापि दर्शनात् ।
प्रजोपप्लवशान्त्या च महीयान्महतामपि ॥ ५६२ ॥

वृषेण भाति वा भक्तकामानां वर्षणात्सदा ।
वृषभो यः स मे कामान्वर्षताद्वृषवर्धनः ॥ ५६३ ॥

मनुश्च शतरूपा च वैराजाद्वपुषोऽभवत् ।
उपचारात्स एवायं विराट् वा यो विराजते ॥ ५६४ ॥

आद्यराजः क्षितिपिता सर्वरत्नैकदोहकृत् ।
पृथुर्जन्माद्येकदक्षो गीःश्रीकीर्तिस्वयंवृतः ॥ ९२ ॥

प्रजाया अन्नदानादिरज्जनाद्रक्षणादपि ।
वैण्य आसीदाद्यराजो नमस्तस्मै यशस्विन ॥ ५६५ ॥

स्वयं ग्रस्तौषधीं पृथ्वीं निर्जित्य तत ओषधीः ।
गृहीत्वा च क्षितिपिता कल्पयामास तां सुताम् ॥ ५६६ ॥

एको बभूव दोग्धासौ सर्वरत्नैकदोहकृत् ।
वसुन्धराया निखिलौषध्यादीनां नृपोत्तमः ॥ ५६७ ॥

प्रथयामास यः पृथ्वीं ख्यातो वा यशसा पृथुः ।
प्रीणयामास चान्नेन प्रजाः क्षुधार्दिताः प्रभुः ॥ ५६८ ॥

वेणपाणिजनिर्वैण्यः प्रजारक्षादिपेशलः ।
सम्राट् जन्माद्येकदक्षोऽनुत्तमश्रीसमाश्रयः ॥ ५६९ ॥ (क)

अतिरेतोरजोयोगदेहोऽतिक्रान्तवांश्च सः ।
गर्भबाल्यादिदुःखौघान्यस्तं नौमि परात्परम् ॥ ५६९ ॥ (ख)
( युग्मम् )

गिरा श्रिया सुकीर्त्या च मूर्तिमत्यावृतोऽच्युतः ।
नामभेदस्त्रिभिर्भिन्नो गीःश्रीकीर्तिस्वयंवृतः ॥ ५७० । ५७१ । ५७२ ॥

*जगद्वृत्तिप्रदश्चक्रवर्तिश्रेष्ठोऽद्वयास्त्रधृत् ।
सूर्यवंशध्वजो रामो राघवः सद्गुणार्णवः ॥ ६३ ॥

रसौषधीदोहनाद्यो जगतां जीविकावहः ।
जगद्वृत्तिप्रदो मेऽस्तु वृत्तिदाने स तत्परः ॥ ५७३ ॥

सार्वभौमनृपाणां यः श्रेष्ठः सर्वेश्वरः प्रभुः ।
स मे तुष्याच्चक्रवर्तिश्रेष्ठः श्रेयःप्रदो हरिः ॥ ५७५ ॥

अद्वयास्त्रधृदस्त्राणां प्रयोगेऽनुपमोऽसताम् ।
विश्वोपद्रवकर्तॄणां मूलोत्पाटनपेशलः ॥ ५७५ ॥

सूर्यवंशध्वजं नौमि जगदनुजिघृक्षया ।
रत्नगर्भावतीर्णं तं ससीतं रावणान्तकम् ॥ ५७६ ॥

सच्चिदानन्दरूपं तं रामं श्यामच्छविं हरिम् ।
*शारदाम्भोजपत्राक्षं प्रपद्ये जानकीप्रियम् ॥ ५७७ ॥

रघुवंश्याम्भोजषण्डचण्डद्युतिं रघूत्तमम् ।
राघवं चण्डदोर्दण्डप्रतापं प्रणमाम्यहम् ॥ ५७८ ॥

---

आदर्शान्तरेष्वयं श्लोकोऽधिको दृश्यते । क्षेपक एवायं स्यात्–
सनकादिमुनिप्राप्यभगवद्भक्तिवर्धनः ।
वर्णाश्रमाधर्मणां कर्ता वक्ता वर्तक ॥ इति ।
कामकोटिप्रतीकाशम्– इति पाठान्तरम् ।

सद्गुणार्णवमीडे तं निर्गुणमपि तत्त्वतः ।
चकिताभूत् त्रयी देवी यद्गुणोद्गायनोत्सवे ॥ ५७९ ॥

काकुत्स्थो वीरराडार्यराजो धर्मधुरन्धरः ।
नित्यस्वस्थाशयः सर्वभद्रग्राही शुभैकदृक् ॥ ६४ ॥

काकुत्स्थमखिलोत्कर्षशालिनं, वा तदन्वयात् ।
जातं वन्दे, यो युयुधे दैत्यैरिन्द्रवृषस्थितिः ॥ ५८० ॥

स वीरराट् सदा तुष्यान्मय्यनाथे, स चाम्बुधिः ।
अद्यापि यद्भयाद्बद्धसेतुर्मर्यादितावधिः ॥ ५८१ ॥

धार्मिकाणां सतां साध्वाचारनिष्ठावतामपि ।
यो राजा तं स्तवीमीशमार्यराजं जगत्प्रभुम् ॥ ५८२ ॥

कोऽन्यस्त्वत्तो रघुपतेऽधिको धर्मधुरन्धरः ।
तृणवत्पितृसत्यार्थं साम्राज्यं त्यक्तवान्भवान् ॥ ५८३ ॥

हीनं विकृत्या, नित्यं यच्चित्तं सत्यपि कारणे ।
शोकादेस्तं प्रपद्येऽहं नित्यस्वस्थाशयं हरिम् ॥ ५८४ ॥

सर्वत्र सर्वदा सर्वभद्रग्राही जगत्पिता ।
सर्वेषां भद्रमन्विच्छन्भद्रदो मेऽस्त्वभद्रहा ॥ ५८५ ॥

शुभैकदृक् सर्वजगन्मङ्गलं चेतसापि यः ।
पश्यन्नजस्रं राजेन्द्रः स रामोऽस्तु शुभप्रदः ॥ ५८६ ॥

नररत्नं रत्नगर्भो धर्माध्यक्षो महानिधिः ।
सर्वश्रेष्ठाश्रयः सर्वशस्त्रास्त्रग्रामवीर्यवान् ॥ ६५ ॥

नररत्नं तमिन्द्रादिकिरीटरत्नरोचिषा ।
रञ्जिताङ्घ्रियुगं वन्दे पुरुषोत्तममच्युतम् ॥ ५८७ ॥

रत्नगर्भान्वर्थकाभूद्यं धृत्वा नृमणेर्मणिम् ।
योऽथवानुत्तमज्ञानो रत्नगर्भः स तुष्यतात् ॥ ५८८ ॥

धर्माध्यक्षः स मां रक्ष्याद्धर्मो यस्याक्षिगोचरः ।
स्वयं तदाचाररतः प्रजासु तत्प्रचारकः ॥ ५८९ ॥

धर्मज्ञाननिधिरीशोऽनुत्तरोऽयं महानिधिः ।
सर्वाशापूरको वासौ दिश्यान्मे मुक्तिशेवधिम् ॥ ५९० ॥

सर्वश्रेष्ठाश्रयं स्तौमि सर्वसज्जनपालकम् ।
सर्वोत्तमगुणाधारं सर्वाश्रयमनुत्तमम् ॥ ५९१ ॥

देवद्विषो द्विषन्सर्वशस्त्रास्त्रग्रामवीर्यवान् ।
स्वयं भार्तषिलब्धास्त्रव्रातवीर्येण यातुहा ॥ ५९२ ॥

जगद्वशी दाशरथिः सर्वरत्नाश्रयो नृपः :
समस्तधर्मसूः सर्वधर्मद्रष्टाखिलार्तिहृत् ॥ ९६ ॥

जगद्वश्युश्यते सर्वजगता, यो वशे स्थितम् ।
जगद्वा त्रायते भीतेः, स मां पायाज्जगत्पतिः ॥ ५९३ ॥

दुःसाध्यतपसा तुष्टो योऽभूद्दशरथात्मजः ।
अजोऽपि सन् दाशरथिस्तस्मायिष्टदुहे नमः ॥ ५९४ ॥

नानाविधोत्कर्षवतां वस्तूनामाश्रयः परः ।
सर्वरत्नाश्रयः सम्राट् रामोऽस्तु श्रेयसे मम ॥ ५९५ ॥

नो पिता न च मातापि न च बन्धुः सुहृज्जनः ।
नालं पातुं नरान्पाति नृप एष जगत्पिता ॥ ५९६ ॥

समस्तधर्मसूः सूते सर्वान्धर्मान्विधेः पिता ।
योऽकर्तृकोक्त्या मन्वादिस्मार्तोक्त्या तं स्तुमो हरिम् ।।५९७।।

स रामो जयतात्सर्वधर्मद्रष्टा धियां पतिः ।
ज्ञानदो ज्ञानिनां ज्ञाननिधिर्धर्मनियामकः ।। ५९८ ।।

अशेषजगतामार्तिहारी हार्यखिलार्तिहृत् ।
देवदुःखासक्तचित्तरक्षसां दुःसहोऽन्तकः ।। ५९९ ।।

अतीन्द्रो ज्ञानविज्ञानपारदृश्वा क्षमाम्बुधिः ।
सर्वप्रकृष्टः शिष्टेष्टो हर्षशोकाद्यनाकुलः ।। ६७ ।।

इन्द्रादप्यतिशेते श्रीरामोऽतीन्द्रः स ईश्वरः ।
इन्द्रादिशासकांस्तांस्तान्रावणादीञ्जघान यः ।। ६०० ।।

सप्तमारम्भः

ज्ञानं शास्त्राच्च विज्ञानं तत्साक्षात्कार इत्यपि ।
तयोः स ज्ञानविज्ञानपारदृश्वाद्विधान्तगः ।।६०१,६०२।।

क्षमाम्बुधे त्वमेवासि प्रपन्नानां क्षमाखनिः ।
क्षमसे त्वं क्षमाधारो द्विषतोऽप्यपराधिनः ।। ६०३ ।।

परां काष्ठां गता श्लाघ्याः गुणा यस्य जगत्पतेः ।
सर्वप्रकृष्ट एवासौ क्रियान्मां पुण्यवत्तमम् ।। ६०४ ।।

अधीतसांगवेदा ये श्रुतिप्रत्यक्षदर्शिनः ।
ते शिष्टास्तत्प्रियो योऽस्ति शिष्टेष्टः स प्रसीदतात् ।। ६०५ ।।

दुःसहेऽधिगते दुःखे सुखे चानुत्तमे ध्रुवे ।
निर्विकारो विजयतां हर्षशोकाद्यनाकुलः ।। ६०६ ।।

पित्राज्ञात्यक्तसाम्राज्यः सपत्नोदयनिर्भयः ।
गुहादेशार्पितैश्वर्यः शिवस्पर्धाजटाधरः ॥ ९८ ॥

अधर्मात्पितरं रक्षन्विमातुरपि मानदः ।
पित्राज्ञात्यक्तसाम्राज्यः स्वीक्रियान्मन्मनोवनम् ॥ ६०७ ॥

विमातृपुत्रभरतोदयहृष्टोऽभयः स्वयम् ।
अभयं तनुतान्मह्यं सपत्नोदयनिर्भयः ॥ ६०८ ॥

गुहेनार्पितमैश्वर्यं तस्मै प्रत्यर्प्य हार्दतः ।
गुहादेशार्पितैश्वर्यो देशान्तान्निर्ययौ वनम् ॥ ६०९ ॥

तपस्विवेशसंप्राप्तश्लाघः किंनु भवेच्छिवः ।
इत्थं धृतस्पर्ध इव शिवस्पर्धाजटाधरः ॥ ६१० ॥

चित्रकूटाप्तरत्नाद्रिर्जगदीशो वनेचरः ।
यथेष्टामोघसर्वास्त्रो देवेन्द्रतनयाक्षिहा ॥ ९९ ॥

गिरिशस्पर्धयैवासौ गिरिवासरुचिं वहन् ।
चित्रकूटाप्तरत्नाद्री रामोऽस्तु श्रेयसे मम ॥ ६११ ॥

जगदीशं त्रिजगतां सृष्टिस्थित्यन्तकारिणम् ।
करुणापूर्णचित्तेनानुगृह्णन्तं स्वकान्नुमः ॥ ६१२ ॥

वनेचरो वनचारितपस्विदुःखदायिनाम् ।
रक्षसामन्तको योऽसौ नमस्तस्मै कृपालवे ॥ ६१३ ॥

यस्यास्त्रयोगः सर्वत्र स्वेच्छया सत्फलावहः ।
यथेष्टामोघसर्वास्त्रो वध्यात्कामाद्यरीन्मम ॥ ६१४ ॥

इन्द्रात्मजं काकमूर्तिं पश्यन्तं जानकीं सतीम् ।
दुर्दृष्टयाहन्नीक्षणेऽसौ देवेन्द्रतनयाक्षिहा ॥ ६१५ ॥

ब्रह्मेन्द्रादिनतैषीको मारीचघ्नो विराधहा ।
ब्रह्मशापहताशेषदण्डकारण्यपावनः ॥ १०० ॥

काकं प्रति प्रयुक्तं तदैषीकास्त्रं सुजित्वरम् ।
ब्रह्मेन्द्रादिनतैषीकस्यासीद् ब्रह्मादिवन्दितम् ॥ ६१६ ॥

सुवर्णबिन्दुखचितकायं मायामृगं हठात् ।
सीतार्थितं जघानासौ मारीचघ्नोऽस्तु मोहहा ॥ ६१७ ॥

सीताहरणमन्तूग्रक्रोधतन्त्रोऽन्तकान्तकः ।
विराधं हतवान्दैत्यं दैत्यघ्नोऽसौ विराधहा ॥ ६१८ ॥

धर्षयामास शुक्रस्य सुतामिक्ष्वाकुवंशजः ।
दण्डकोऽथ द्विजक्रोधात्सदेशः शतयोजनः ॥

पांसुवृष्टया पिहितोऽङ्घ्रिपूतोऽभूद् यस्य तं स्तुमः ।
ब्रह्मशापहताशेषदण्डकारण्यपावनः ॥ ६१९ ॥ (युग्मं)

चतुर्दशसहस्रोग्ररक्षोघ्नैकशरैककृत् ।
खरारिस्त्रिशिरोहन्ता दूषणघ्नो जनार्दनः ॥ १०१ ॥

एकोऽपि बाणो यस्यास्ति लयकृत्सोऽस्त्वभद्रहा ।
चतुर्दशसहस्रोग्ररक्षोघ्नैकशरैककृत् ॥ ६२० ॥

खरं तं खरबुद्धिं यस्त्रिशिरस्कं च दूषणम् ।
एक एवाभयो वीरः शस्त्रैश्चिच्छेद सानुगान् ॥

खरारिस्त्रिशिरोहन्ता दूषणघ्नः स सद्गतिः ।
प्रखरान्क्रोधकामादिवर्गाञ्शीघ्रं छिनत्तु मे ।। युग्मकम् ।।
।। ६२१, ६२२, ६२३ ।।

पीडयन्पापिनो भक्तैर्याच्यते च कृपानिधिः ।
स्वाभीष्टं, मां सदाव्यात्स कृपादृष्ट्या जनार्दनः ।। ६२४ ।।

जटायुषोऽग्निगतिदोऽगस्त्यसर्वस्वपात्रराट् ।
लीलाधनुष्कोट्यपास्तदुन्दुभ्यस्थिमहाचयः ।। १०२ ।।

जटायुषो रावणेन हतस्य पितृवत्क्रियाः ।
जटायुषोऽग्निगतिदो योऽन्त्याश्चक्रे स सद्गतिः ।। ६२५ ।।

अगस्त्यार्पितसर्वस्वपात्रराजो य ईश्वरः ।
तन्मुक्तिदो, मेऽस्तु भव्योऽगस्त्यसर्वस्वपात्रराट् ।। ६२६ ।।

लीलाधनुष्कोट्यपास्तदुन्दुभ्यस्थिमहाचयः ।
यस्तच्चित्रं किमस्यास्ति विश्वौहः कूर्मरूपिणः ।। ६२७ ।।

सप्ततालव्यधाकृष्टध्वस्तपातालदानवः ।
सुग्रीवराज्यदोऽहीनमनसैवाभयप्रदः ।। १०३ ।।

विद्धवैकोऽपि शरो यस्य सप्ततालान्समं जवात् ।
पातालस्थान्दानवांश्च व्यधाद्ध्वस्तांस्ततः कपिः ।।
विश्वस्तः, कृतसख्यश्च येन, पायात्स मां हरिः ।
सप्ततालव्यधाकृष्टध्वस्तपातालदानवः ।। युग्मं ।। ।।६२८ ।।

सुग्रीवाय ददौ राज्यं पूर्वमेव वधादरेः ।
सुग्रीवराज्यदो मेऽस्तु सर्वकामार्थसिद्धये ।। ६२९ ।।

यः पूर्णशक्तिरभयं सुग्रीवाय समादधे ।
वध्यादरीन्ममाहीनमतसैवाभयप्रदः ॥ ६३० ॥

हनुमद्रुद्रमुख्येशः समस्तकपिदेहभृत् ।
सनागदैत्यबाणैकव्याकुलीकृतसागरः ॥ १०४ ॥

मुख्यभक्तस्य वीरस्य रुद्रमूर्तेर्हनूमतः ।
हनुमद्रुद्रमुख्येशो यः प्रभुः सोऽस्तु मे प्रभुः ॥ ६३१ ॥

समस्तकपिरूपेण योऽवतीर्णोंऽशतो हरिः ।
सोऽव्यात्सदोद्यतं दासं समस्तकपिदेहभृत् ॥ ६३२ ॥

क्षुब्धाब्ध्यर्थनया येन क्षिप्तो बाणः सहस्रशः ।
दैत्यान्नागाञ्जघानासौ तत्रत्यांल्लोककण्टकान् ॥
चूडामणिर्वीरचक्रस्यास्तु स पापकृन्तनः ।
सनागदैत्यबाणैकव्याकुलीकृतसागरः ॥ युग्मं ॥ ६३३ ॥

सम्लेच्छकोटिबाणैकशुष्कनिर्दग्धसागरः ।
समुद्राद्भुतपूर्वैकबद्धसेतुर्यशोनिधिः ॥ १०५ ॥

क्रुद्ध एकेन बाणेन म्लेच्छानां कोटिभिः सह ।
ददाह सागरं रामो दप्तदर्पान्तकारकः ॥
सम्लेच्छकोटिबाणैकशुष्कनिर्दग्धसागरः ।
अतिवेलं स मायाब्धिं मम शोषयताद्धरिः ॥ युग्मं ॥ ६३४

बद्धसेतुर्य एकोऽब्धावत्याश्चर्यशुचिश्रवाः ।
समुद्राद्भुतपूर्वैकबद्धसेतुः स तुष्यतु ॥ ६३५ ॥

अलौकिकानि कार्याणि तत्र कुर्वंश्च कारयन् ।
तज्जन्ययशसां स्रोतः स मां पायाद्यशोनिधिः ॥ ६३६ ॥

**असाध्यसाधको लङ्कासमूलोत्कर्षदक्षिणः ।**
**वरदृप्तजगच्छल्यपौलस्त्यकुलकृन्तनः ॥ १०६ ॥**

लोकेऽसाध्यमभीष्टं यो भक्तेभ्यः साधयन्प्रभुः ।
असाध्यसाधकः श्रीशः श्रियं दिश्यात्स मे पराम् ॥ ६३७ ॥

दुर्धर्षो दुःसहो लङ्कासमूलोत्कर्षदक्षिणः ।
लंकां सरावणकुलां ध्वस्तां चक्रेऽसुरान्तकः ॥ ६३८ ॥

तांस्तान्दैत्यान्वरैर्दृप्तान्विश्वोपद्रवकारिणः ।
वरदृप्तजगच्छल्यपौलस्त्यकुलकृन्तनः

चकर्त यः स मे भूयान्मंगलाय जगत्पिता ।
जगन्नेताऽमरेन्द्रस्य लज्जात्राणपरायणः ॥ युग्मं । ६३९ ॥

**रावणिघ्नः प्रहस्तच्छित्कुम्भकर्णभिदुग्रहा ।**
**रावणैकशिरश्छेत्ता निःशङ्केन्द्रैकराज्यदः ॥ १०७ ॥**

रावणिघ्नो दशास्यस्य प्राणेभ्योऽपि प्रियान्सुतान् ।
महोदरादीन्वीरांस्तान् घ्नन्यो मेऽस्तु सदाश्रयः ॥ ६४० ॥

चिच्छेद तं प्रहस्ताख्यं वीराग्रण्यं महाबलम् ।
मुरारिः स प्रहस्तच्छित् छिद्यान्मोहमयं तमः ॥ ६४१ ॥

कल्पान्ताग्निरिव क्रुद्धो द्विषतां दाहकोऽसुरः ।
यस्तं मृत्कुम्भवत्कुम्भकर्णभिद्भिन्नवान्हरिः ॥ ६४२ ॥

उग्राख्यमुग्रहा वीरमुग्रवीर्यबलौजसम् ।
जघान यः स सद्भक्तभव्यकृदस्तु भूतिदः ॥ ६४३ ॥

रावणैकाशिरश्छेत्ता चिच्छेदैकोऽसुरान्तकः ।
तानि लङ्कापतेः कानि यान्यनम्राणि सन्ततम् ।। ६४४ ।।

वधात्तस्येन्द्राय राज्यं ददौ निष्कण्टकं प्रभुः ।
यः स मे क्षेमकृद्भूयान्निःशंकेन्द्रैकराज्यदः ।। ६४५ ।।

स्वर्गास्वर्गत्वविच्छेदी देवेन्द्रानिन्द्रताहरः ।
रक्षोदेवत्वहृद्धर्माधर्मत्वघ्नः पुरुष्टुतः ।। १०८ ।।

स्वर्गं पुनः सुरावासं संपाद्य राघवः प्रभुः ।
स्वर्गास्वर्गत्वविच्छेदी देवांस्तान्समतोषयत् ।। ६४६ ।।

रावणेन कृतं यत्तदनिन्द्रत्वमपक्रमात् ।
इन्द्रस्य स्वर्गतो,ऽपास्यद्देवेन्द्रानिन्द्रताहरः ।। ६४७ ।।

देवत्वे रक्षसां यज्ञभोजित्वं स्वर्गभोग्यताम् ।
रक्षोदेवत्वहृद्रामो जहार तद्वधाद्धरिः ।। ६४८ ।।

धर्मोऽधर्मत्वरूपत्वं प्राप्तो यो यदुपद्रवात् ।
तं प्रत्यस्थापयद्धर्माधर्मत्वघ्नः कृपानिधिः ।। ६४९ ।।

ईदृशेनातिदिव्येन कर्मणा यः पुरुष्टुतः ।
ब्रह्मेन्द्ररुद्रदेवर्षिस्तुतोऽस्तु कीर्तिदो हरिः ।। ६५० ।।

नतिमात्रदशास्यारिदत्तराज्यविभीषणः ।
सुधावृष्टिमृताशेषस्वसैन्योज्जीवनैककृत् ।। १०९ ।।

विभीषणाय रक्ताय प्रपन्नायास्तबन्धवे ।
महाभक्ताय राज्यं यो ददौ सोऽस्त्वष्टकामधुक् ।
नतिमात्रदशास्यारिदत्तराज्यविभीषणः ।। ६५१ ।।

हताशेषस्वसैन्यस्य सुधावृष्ट्या ददौ पुनः ।
जीवनं योऽमृताधारः सोऽमृतत्वप्रदोऽस्तु मे ।
सुधावृष्टिमृताशेषस्वसैन्योज्जीवनैककृत् ॥ ६५२ ॥

देवब्राह्मणनामैकदाता सर्वामरार्चितः ।
ब्रह्मसूर्येन्द्ररुद्रादिवन्द्यार्पितसतीप्रियः ॥ ११० ॥

देवब्राह्मणसत्साधून्प्रणामैः सत्करोति यः ।
देवब्राह्मणनामैकदाता तुष्यात्सदा मयि ॥ ६५३ ॥

इन्द्रादिदेववृन्दैर्योऽर्च्यते सद्भक्तितोषितः ।
तुष्टोऽस्तु मयि दासेऽपि सदा सर्वामरार्चितः ॥ ६५४ ॥

ब्रह्मेन्द्रादिप्रशस्तैकवृत्तपतिव्रतापतिः ।
ब्रह्मसूर्येन्द्ररुद्रादिवन्द्यार्पितसतीप्रियः ॥
योऽस्ति तस्मै प्रणामोऽस्तु सदाचारस्य सेतवे ॥ ६५५ ॥

अयोध्याखिलराजाग्र्यः सर्वभूतमनोहरः ।
स्वाम्यतुल्यकृपादण्डो हीनोत्कृष्टैकसत्प्रियः ॥ १११ ॥

अयोध्याखिलराजाग्र्यः किं न स्यादेष राघवः ।
*चक्रिरे दिव्यकर्माणि येनाब्धौ बद्धसेतुना ॥ ६५६ ॥

कोऽन्यस्त्वत्तः परो राम सर्वभूतमनोहरः ।
द्विषत्स्वपि शरण्येन येन प्रेमैव दर्शितम् ॥ ६५७ ॥

ऐश्वर्यानुगुणौ यस्य निग्रहानुग्रहौ सदा ।
स्वाम्यतुल्यकृपादण्डः कृपापात्रं करोतु माम् ॥ ६५८ ॥

पामरे च गुणोत्कर्षशालिन्यपि सदा समः ।
योऽसि तस्मै नमस्तुभ्यं हीनोत्कृष्टैकसत्प्रिय ॥ ६५९ ॥

*कर्मणि प्रयोगः

श्वपक्ष्यादिन्यायदर्शी हीनार्थाधिकसाधकः ।
वधव्याजानुचितकृत्तारकोऽखिलतुल्यकृत् ॥ ११२ ॥

ब्रह्मचार्याहतो दण्डप्रहारैः श्वा तथा खगौ ।
विराध्यन्तौ च नीडार्थं न्यायं तेषां चकार यः ॥
श्वपक्ष्यादिन्यायदर्शी सोऽस्तु मे श्रेयसे प्रभुः ॥ ६६० ॥

न्यूनस्यापि स्वभक्तानामर्थस्याधिक्यसाधकः ।
दिश्यान्मे पूर्णतां श्रीशो हीनार्थाधिकसाधकः ॥ ६६१ ॥

शूद्रं हत्वा तपोऽवैधं कुर्वन्तं तारयन्हरिः ।
वधव्याजानुचितकृत्तारकस्तारकोऽस्तु मे ॥ ६६२ ॥

साम्येन तिष्ठन्सर्वत्र द्विषत्स्वपि सुहृत्स्वपि ।
भूतेषु समदृष्टिं मां क्रियात्सोऽखिलतुल्यकृत् ॥ ६६३ ॥

पार्वत्यधिकमुक्तात्मा प्रियात्यक्तस्मरारिजित् ।
साक्षात्कुशलवच्छद्मेन्द्राग्नितातोऽपराजितः ॥ ११३ ॥

जहौ प्रजार्थं सीतां तां पार्वत्यधिकसुन्दरीम् ।
पार्वत्यधिकमुक्तात्मा तमुमार्धं हसञ्शिवम् ॥ ६६४ ॥

शिवो वियुक्तः प्रियया वक्षं स्मरं च नाशयन् ।
रामस्त्वकामो निष्क्रोधः प्रियात्यक्तस्मरारिजित् ॥ ६६५ ॥

इन्द्राग्न्यंशौ कुशलवौ यस्माज्जातौ यशोनिधेः ।
साक्षात्कुशलवच्छद्मेन्द्राग्नितातः स तुष्यतात् ॥ ६६६ ॥

बाह्येनाभ्यन्तरेणापि योऽजय्योऽन्येन जिष्णुना ।
केनापि द्विषता नौमि रामं तमपराजितम् ॥ ६६७ ॥

कोसलेन्द्रो वीरबाहुः सत्यार्थत्यक्तसोदरः ।
शरसन्धाननिर्धूतधरणीमण्डलो जयः ॥ ११४ ॥

क्व वा किं वा कीदृशं वा चक्रिरे कठिनं तपः ।
कोसलस्था यतो राजा कोसलेन्द्रोऽभवद्धरिः ॥ ६६८ ॥

त्रिपुरारिधनुर्भङ्गः समुद्रे सेतुबन्धनम् ।
रावणादिवधोऽप्यस्य वीरबाहोर्न चित्रकृत् ॥ ६६९ ॥

ब्राह्मणेन कृतं तं च समयं परिरक्षितुम् ।
तत्याज लक्ष्मणं प्रेष्ठं सत्यार्थत्यक्तसोदरः ॥ ६७० ॥

शरसन्धाननिर्धूतधरणीमण्डलो भुवम् ।
-प्रविष्टायां च सीतायां तात्त्विकं प्रेम दर्शयन् ॥
योऽभूत्, चकम्पे च जगद्यत्र तस्मै नमो नमः ॥ ६७१ ॥

स्वयं यो जयरूपत्वात्सर्वोत्कृष्टो जयावहः ।
स्वभक्तानां, यत्र तत्र स जयोऽस्तु जयप्रदः ॥ ६७२ ॥

ब्रह्मादिकाम्यसान्निध्यसनाथीकृतदैवतः ।
ब्रह्मलोकाप्तचण्डालाद्यशेषप्राणिसार्थपः ॥ ११५ ॥

यत्सान्निध्यं सदाकाम्य ब्रह्मादीनां, तदर्पणात् ।
पुनश्चक्रे दैवतौघं सनाथं यः स मे गतिः ।
ब्रह्मादिकाम्यसान्निध्यसनाथीकृतदैवतः ॥ ६७३ ॥

चण्डालादीनपि स्वीयशक्त्या कोसलगान्प्रभुः ।
आत्मतन्त्रो निजं ब्रह्मलोकं प्रापितवान्हरिः ॥

ब्रह्मलोकाप्तचण्डालाद्यशेषप्राणिसार्थपः ।
स रामस्तारको मां च तमेव नयताद्द्रुतम् ।। युग्मम् ।। ६७४ ।।

स्वर्नीतगर्दभाश्वादिश्चिरायोध्यावनैककृत् ।
रामद्वितीयः सौमित्रिर्लक्ष्मणः प्रहृतेन्द्रजित् ।। ११६ ।।

स्वर्नीतगर्दभाश्वादिर्दयालुर्भगवान्परम् ।
ईदृक्कोऽन्यो द्वितीयः स्यात्करुणापारसागरः ।। ६७५ ।।

स्वदेशस्थान्पशूंश्चापि स्वर्गं नीत्वा चिरं वनम् ।
चक्रेऽयोध्यां स मां पायाच्चिरायोध्यावनैककृत् ।। ६७६ ।।

राममूर्तिरेव रामद्वितीयः शेषमूर्तिधृत् ।
सीतारामपदाम्भोजरसलोलुपषट्पदः ।। ६७७ ।।

सुमित्रानन्दनः सोऽयं सौमित्रीराघवानुजः ।
श्रीरामपादसेवानुरक्तसंसक्तमानसः ।। ६७८ ।।

लक्ष्मीशाली सदा विष्णुः सर्वलक्षणलक्षितः ।
लक्ष्मणः सततं भूयान्ममानुग्रहतत्परः ।। ६७९ ।।

येनेन्द्रोऽपि जितो यस्य भयाद्देवर्षभा अपि ।
स्वर्गं त्यक्त्वा पलायन्त तमहन्प्रहृतेन्द्रजित् ।। ६८० ।।

विष्णुभक्तांश*रामाङ्घ्रिपादुकाराज्यनिर्वृतः ।
भरतोऽसह्यगन्धर्वकोटिघ्नो लवणान्तकः ।। ११७ ।।

विष्णोर्व्यूहधरो भक्तः सर्वोत्कृष्टस्तदंशभृत् ।
विष्णुभक्तांश एवायं विष्णुभक्ति ददातु मे ।। ६८१ ।।

---

*विसर्गलोप आर्षः

यो मेने कृतकृत्यं स्वं तपस्वीव व्रतेस्थितः ।
लब्ध्वा रामाङ्घ्रिसंस्पृष्टपादुकां शासनाय ताम् ।
तुष्यान्मयि स रामाङ्घ्रिपादुकाराज्यनिर्वृतः ॥ ६८२ ॥

कीर्तिं बिभ्रत्स्ववंश्यांश्च कुर्वन्कीर्तिमतोऽखिलान् ।
भरतो मे भ्रियाद्भक्तिं रामाङ्घ्रिभवितलोलुपः ॥ ६८३ ॥

हतान्मेऽसह्यगन्धर्वकोटिघ्नोऽभ्यन्तरस्थितान् ।
प्रच्छन्नान्कामक्रोधादीन्सपत्नान्स सपत्नहा ॥ ६८४ ॥

अन्याजय्यं लवणाख्यमसुरं लोककण्टकम् ।
यो जघान स मे दिश्याद्विजयं लवणान्तकः ॥ ६८५ ॥

शत्रुघ्नो वैद्यराडायुर्वेदगर्भौ*षधीपतिः ।
नित्यामृतकरो धन्वन्तरिर्यज्ञो जगद्धरः ॥ ११८ ॥

शत्रूणामखिलानां यः शत्रुघ्नो मर्मशातनः ।
संवर्ताग्निरिव क्रुद्धः स ह्रियान्मम दुर्गतिम् ॥ ६८६ ॥

वैद्यराट् सर्वरोगाणां हर्ता योऽमृतवर्षणः ।
तस्मै भगवदंशाय वैद्यानां स्वामिने नमः ॥ ६८७ ॥

आयुर्वेदोऽखिलो गर्भे यस्यास्ति व्याधिनाशिनः ।
तस्मै नमः सदास्त्वायुर्वेदगर्भाय विष्णवे ॥ ६८८ ॥

स्मृत्या यस्याशु नश्यन्ति समूला व्याधयो नृणाम् ।
ओषधीपतिरस्त्वेष चानुकूल्यावहो मम ॥ ६८९ ॥

---

*विसर्गलोप आर्षः

नित्यामृतकरो हस्तामृतदानेन संततम् ।
व्याधिग्रस्तं समाश्वास्य मामव्याद्व्याधिनाशनः ।। ६९० ।।

धान्वन्तरिः स भगवान्मूलोत्पाटनशक्तिमान् ।
व्याधीनां व्याधिदुष्पारमरुतापापहो हरिः ।। ६९१ ।।

आकूत्यां यो रुचेर्जातो विष्णोरंशः सनातनः ।
यज्ञोऽवतीर्णस्तं नौमि यज्ञाध्यक्षाधिदैवतम् ।। ६९२ ।।

यज्ञद्वारकवृष्ट्यादिद्वारतो यो जगद्धरः ।
सोऽव्यान्मां जगदीशानो जगच्चक्रप्रवर्तकः ।। ६९३ ।।

सूर्यारिघ्नः सुराजीवो दक्षिणेशो द्विजप्रियः ।
छिन्नमूर्धापदेशार्कः शेषाङ्गस्थापितामरः ।। ११९ ।।

तैस्तैः कर्मानुषक्तातिदिव्यैर्मन्त्रैर्विवस्वतः ।
सूर्यारिघ्नः स रक्षोघ्नैर्हन्त्यरीन्राक्षसान्क्षणात् ।। ६९४ ।।

यज्ञाधिष्ठातृभावेन यज्ञद्वाराखिलान्सुरान् ।
सुराजीवो जीवयति यस्तं नौमि जगत्पतिम् ।। ६९५ ।।

दक्षिणेशो दक्षिणाख्यशक्तेः पतिर्जगत्पतिः ।
यज्ञसमृद्धिकारिण्याः सोऽस्तु मे दक्षिणः सदा ।। ६९६ ।।

यज्ञाधिकारिणां सर्वद्विजानामिष्टदानतः ।
योऽस्ति नित्यं प्रियःसोस्तु प्रेमाधारो द्विजप्रियः ।। ६९७ ।।

*फलमुपाकृतं देवैः सत्रे तस्य शिरोऽपतत् ।
तद्धर्ममभवत्तत्रार्च्यते यज्ञे य ईश्वरः ।।
छिन्नमूर्धापदेशार्कः स भूयात्सत्फलावहः ।। ६९८ ।।

---

*अर्कोऽर्चनीयो धर्मी यत्र । स च धर्म उपाकृतस्य पशोः शिरो भागः

तच्छिरोभागशेषाङ्गे यज्ञभागभुजोऽमराः ।
स्थापिता येन जयतात् शेषाङ्गस्थापितामरः ।। ६९९ ।।

विश्वार्थाशेषरुद्रार्थशिरश्छेदाक्षताकृतिः ।
वाजपेयादिनामाग्निर्वेदधर्मपरायणः ।। १२० ।।

आसीदुपाकृतस्यापि शिरश्छेदेऽक्षताकृतिः ।
प्रवर्ग्याख्यशिरः सन्धानेनान्यूनफलप्रदा ।।
यतो विश्वं च रुद्राश्चाप्यायन्तेऽनेन तं स्तुमः ।
विश्वार्थाशेषरुद्रार्थशिरश्छेदाक्षताकृतिम् ।। ७०० ।।

समाप्तं सप्तमं शतम् ।

-----

आरम्भोऽष्टमस्य ।

वाजपेयादयो यज्ञविशेषा यस्य मूर्तयः ।
वाजपेयादिनामायं यज्ञो मे प्रीयतां सदा ।। ७०१ ।।

अग्निसाध्योऽयमग्निश्च देवानामग्रगोऽथवा ।
हविषां प्रापको वास्तु द्विजैः सेव्यो ममेष्टदः ।। ७०२ ।।

सर्वे वेदाश्च तद्धर्मा मन्यन्ते यं पराश्रयम् ।
सर्वेष्टसिद्धयै तं स्तौमि वेदधर्मपरायणम् ।। ७०३ ।।

श्वेतद्वीपपतिः साङ्ख्यप्रणेता सर्वसिद्धराट् ।
विश्वप्रकाशितज्ञानयोगो मोहतमिस्रहा ।। १२१ ।।

श्वेतद्वीपपतिः क्षीराम्बुधिदेशे कृतस्थितिः ।
योऽस्ति तस्मै मुनीशाय कपिलाय नमो नमः ।। ७०४ ।।

तत्त्वनिरूपकः सांख्यप्रणेता ज्ञानिनां वरः ।
तत्त्वाज्ञानोत्थमोहान्ध्यनाशकोऽस्तु श्रिये मम ॥ ७०५ ॥

सर्वासुर्यादिसिद्धानां राजा यः सर्वसिद्धराट् ।
योगसिद्धिं स मे दिश्याद्योगैश्वर्यप्रदः प्रभुः ॥ ७०६ ॥

विवेकमात्मनाश्चित्तनिरोधं च मुनीश्वरः ।
विश्वप्रकाशितज्ञानयोगः प्राकाशयद्धरिः ॥ ७०७ ॥

आत्माज्ञानजमोहान्ध्यं हन्ति मोहतमिस्रहा ।
यस्तस्मै ज्ञानसूर्याय नित्योदितश्रिये नमः ॥ ७०८ ॥

**योगस्वामी ध्यानभङ्गसगरात्मजभस्मकृत् ।**
**धर्मो वृषेन्द्रः सुरभीपतिः शुद्धात्मभावितः ॥ १२२ ॥**

यमाद्यष्टाङ्गयोगस्योपदेष्टृत्वादिना हरिः ।
योगस्वामी स कपिलः फलदत्वात्स्वयं प्रभुः ॥ ७०९ ॥

ध्यानभङ्गाद्योऽतिरुष्टो ददाह सगरात्मजान् ।
सोऽस्तु तुष्टो ध्यानभङ्गसगरात्मजभस्मकृत् ॥ ७१० ॥

धर्मोऽयं भगवानेव येनेदं ध्रियते जगत् ।
यदोतप्रोतं विश्वं च तस्मै विश्वात्मने नमः ॥ ७११ ॥

कामानां वर्षितोत्कृष्टो वृषेन्द्रो वृषभाकृतिः ।
युगानुरूपपादोऽसौ कामधुक् भवतान्मम ॥ ७१२ ॥

सुरभिरिष्टसिद्धिर्वै तत्पतिर्धर्म उच्यते ।
यः सेवते तं सुरभीपतिं स्वेष्टं स आप्नुयात् ॥ ७१३ ॥

शुद्धात्मभावितो भक्तिश्रद्धाशुद्धात्मवृत्तिभिः ।
सेवितो यः सदा सोऽस्तु धर्मोऽन्यवर्गपुष्टये ॥ ७१४ ॥

शम्भुत्रिपुरदाहैकस्थैर्यविश्वरथोद्वहः ।
भक्तशम्भुजितो दैत्यामृतवापीसमस्तपः ॥ १२३ ॥

दिधक्षोस्त्रिपुरं शम्भोस्तं विश्वरथमुद्वहन् ।
वृषाकृतिश्च यो धर्मः यातात्तत्रे स मे गतिः ॥
शम्भुत्रिपुरदाहैकस्थैर्यविश्वरथोद्वहः ॥ ७१५ ॥

जितो य इव भक्तेन शम्भुनातो वहंश्च तम् ।
भक्तशम्भुजितो मां च रक्ष्याद्भक्तेष्टदो वृषः ॥ ७१६ ॥

मृतदैत्योज्जीवनाय कविनिर्मितवापिकाम् ।
सुधामयीमशेषां यः पपौ स वृष उत्तमः ।
दिश्यान्मेऽप्यमृतं दैत्यामृतवापीसमस्तपः ॥ ७१७ ॥

महाप्रबलविश्वैकद्वितीयोऽखिलनागराट्
शेषदेवः सहस्राक्षः सहस्रास्यशिरोभुजः ॥ १२४ ॥

मायारूपो महौजस्को द्वितीयो विश्वकारणम् ।
महाप्रबलविश्वैकद्वितीयः शेषरूपधृत् ॥ ७१८ ॥

विश्वेश्वरो विश्वभारवाहकोऽखिलनागराट् ।
विश्वधर्माधर्मरूपशेषरक्षणतत्परः ॥ ७१९ ॥

अनादिर्लयकालेऽपि शिष्यते यः सनातनः ।
शेषदेवाय सन्त्वस्मै प्रणामाः कोटिशो मम ॥ ८२० ॥

सहस्राक्षं सहस्रास्यं सहस्रशिरसं तथा ।
सहस्रभुजमीशं तं स्तौम्यनन्तं परात्परम् ॥ ७२१ । ७२२ । ७२३ । ७२४ ॥

फणामणिकणाकारयोजिताब्ध्यम्बुदक्षतिः ।
कालाग्निरुद्रजनको मूसलास्त्रो हलायुधः ॥ १२५ ॥

अब्धिजीमूतकाश्यप्यो यत्फणामणिबिम्बिताः ।
अण्वाकारा विराजन्ते महान्तोऽपि स मे गतिः ।
फणामणिकणाकारयोजिताब्ध्यम्बुदक्षतिः ॥ ७२५ ॥

विश्वं दहञ्शेषमुखोद्गीर्णः कल्पाग्निरुच्यते ।
कालाग्निरुद्रजनकः प्रलये सोऽवताल्लयात् ॥ ७२६ ॥

वापेऽत्र कर्मबीजानां हलं च मुसलं तथा ।
लोकवदुपचर्यन्ते यस्मिन्स कथ्यते बुधैः ।
विश्ववैचित्र्यकारित्वान्मुसलास्त्रो हलायुधः ॥ ७२७ । ७२८ ॥

नीलाम्बरो वारुणीशो मनोवाक्कायदोषहा ।
असन्तोषदृष्टिमात्रपातितैकदशाननः ॥ १२६ ॥

एव नीलाम्बरोऽतोऽस्ति यद्धारयति तामसीम् ।
विष्णोर्भगवतो मूर्तिं मोहध्वान्तं ह्रियान्मम ॥ ७२९ ॥

वारुणीशः स मां पातादात्मानन्दमदोन्मदः ।
मोहस्वरूपमदिरामदोन्मत्तं प्रलापिनम् ॥ ७३० ॥

त्राता यत्र जगन्नाथो मनोवाक्कायदोषहा ।
चित्रं किं तत्र संसारघोरदुःखोपशान्तये ॥ ७३१ ॥

बिभ्युरिन्द्रादयो यस्माद्यस्मै रामस्य संसृतिः ।
दिग्जये रावणं तं च पातालस्थं जिगाय यः ॥
असन्तोषदृष्टिमात्रादेव मे सोऽस्तु शत्रुहा ।
असन्तोषदृष्टिमात्रपातितैकदशाननः ॥ ७३२ ॥

**बलिसंयमनो घोरो रौहिणेयः प्रलम्बहा ।**
**मुष्टिकघ्नो द्विविदहा कालिन्दीकर्षणो बलः ॥ १२७ ॥**

भावीन्द्रस्यापि देवेन्द्राहितभावस्य यो व्यधात् ।
बलेः संयमनं सोऽस्तु बलिसंयमनः श्रिये ॥ ७३३ ॥

तामसीमूर्तिभृत्सोऽयं घोरो भीष्मोऽसतां सदा ।
नमोऽस्तु तस्मै शेषाय विष्णोरंशावतारिणे ॥ ७३४ ॥

रोहिणीनन्दनं शेषावतारं यदुवंशजम् ।
कृष्णाग्रजं रौहिणेयं तं वन्दे पुरुषोत्तमम् ॥ ७३५ ॥

प्रलम्बासुरसंहर्ता मल्लमुष्टिकवीरहा ।
द्विविधाख्यासुरस्यासुहर्ता यः स प्रलम्बहा ॥
मुष्टिकघ्नो द्विविधहा भूयान्मेऽप्यरिकृन्तनः ॥
॥ ७३६ । ७३७ । ७३८ ॥

कलिन्दजां तां यमुनां कालिन्दीकर्षणो हली ।
कृष्टवान्यो हलेनायं रामस्तुष्यात्सदा मयि ॥ ७३९ ॥

बलो बलं मे दिशतादशेषबलशालिनाम् ।
पराध्योऽशेषभूभारभरणैकक्षमः प्रभुः ॥ ७४० ॥

**रेवतीरमणः पूर्वभक्तिखेदाच्युताग्रजः ।**
**देवकीवसुदेवाह्वकश्यपादितिनन्दनः ॥ १२८ ॥**

रेवत्या रममाणोऽसौ रेवतीरमणो हरेः ।
व्यूहधारी हली हारी विहारी मां सदावतात् ॥ ७४१ ॥

एष पूर्वं लक्ष्मणोऽभूद्भक्तिखिन्नश्च सेवकः ।
रामानुजो हरिस्तस्मै ज्येष्ठत्वं तत्फलं ददौ ॥
ज्यैष्ठ्यं देयात्स मे पूर्वभक्तिखेदाच्युताग्रजः ॥ ७४२ ॥

अदितिः कश्यपश्चापि तेपाते तप उत्तमम् ॥
पूर्वं, ततो देवकी च वसुदेवश्च नामतः ॥
तौ प्रापतुः पुत्ररत्नं कृष्णं ब्रह्म सनातनम् ।
स मे कृष्णः सदा तुष्टो भूयान्मुक्तिप्रदो हरिः ॥
देवकीवसुदेवाह्वकश्यपादितिनन्दनः ॥ ७४३ ॥

वार्ष्णेयः सात्वतां श्रेष्ठः शौरिर्यदुकुलोद्वहः ।
नराकृति परंब्रह्म सव्यसाचिवरप्रदः ॥ १२९ ॥

वृष्णिवंशोद्भवायास्तु वार्ष्णेयाय नमो नमः ॥ ७४४ ॥
तुष्टोऽस्तु सात्वतां श्रेष्ठो यादवानां पतिर्हरिः ॥ ७४५ ॥

शूरपौत्रः शूरवीरश्रेष्ठः शौरिर्जगत्पतिः ।
यदून् कंसातितप्तांस्तांस्तत्रे यदुकुलोद्वहः ॥ ७४७ ॥

ब्रह्मैव साक्षाद्भक्तानामिष्टपूर्त्यै नराकृति ।
उत्कृष्टं श्यामलं धाम वन्दे कोटीन्दुसुन्दरम् ॥ ७४८ ॥

वन्देऽहं तत्परंब्रह्म बृहत्तममनुत्तमम् ।
ब्रह्माण्डान्यप्यनन्तानि यत्र यांति लयं लये ॥ ७४९ ॥

ऐन्द्रेर्विजयलाभार्थं सर्वतो बाणवेधिनः ।
वरं ददौ य इन्द्राय सव्यसाचिवरप्रदः ॥ ७५० ॥

ब्रह्मादिकाम्यलालित्यजगदाश्चर्यशैशवः ।
पूतनाघ्नः शकटभिद्यमलार्जुनभञ्जनः ॥ १३० ॥

वर्णनातीतलीलास्ताः काम्या यच्छैशवस्य सः ।
ब्रह्मादिकाम्यलालित्यजगदाश्चर्यशैशवः ॥
श्यामः कामसदृग्रूपः श्रीकृष्णः प्रीयतां मम ॥ ७५१ ॥

पूतनायाः कियद्भाग्यं वर्ण्यते यत्कुचौ पिबन् ।
पूतनाघ्नो हृदि क्रीडन्ददौ धात्र्युचितां गतिम् ॥ ७५२ ॥

शायितः शकटस्याधो भिन्दंस्तमङ्घ्रिघाततः ।
दूरेऽस्यंश्च शकटभिद्रक्षताद्वीर्यवत्तमः ॥ ७५३ ॥

बालकृष्णो गुणैर्बद्धो यमलार्जुनभञ्जनः ।
शापात्तौ मोचयन् भक्तानाशु मोचयताद्भवात् ॥ ७५४ ॥

वातासुरारिः केशिघ्नो धेनुकारिर्गवीश्वरः ।
दामोदरो गोपदेवो यशोदानन्दकारकः ॥ १३१ ॥

तृणावर्तं हयेन्द्रारिं गर्दभासुरमच्युतः ।
यो जघानानन्दयंस्तान्गोपबालान्स्वलीलया ॥
वातासुरारिः केशिघ्नो धेनुकारिः समावतात् ॥ ७५५ ॥
७५६ । ७५७ ॥

गोपालः श्रुतिगोगेयो योऽवाङ्मनसगोचरः ।
धर्माभिधानो गोमूर्त्या मामव्यात्स गवीश्वरः ॥ ७५८ ॥

मात्रोलूखलबद्धस्य दाम यस्योदरेऽर्पितम् ।
विश्वसूत्रोतमध्यो वा स मां दामोदरोऽवतात् ॥ ७५९ ॥

अशेषगोपदेवो वा तद्बालैः सह लीलया ।
दीव्यन्यो रम्यया कृष्णो गोपदेवः स मे प्रभुः ॥ ७६० ॥

किं नु यशोदया तप्तं तपो येन तदङ्गणे ।
कान्वेष्योऽपि मृदा क्रीडन् यशोदानन्दकारकः ॥ ७६१ ॥

कालीयमर्दनः सर्वगोपगोपीजनप्रियः ।
लीलागोवर्धनधरो गोविन्दो गोकुलोत्सवः ॥ १३२ ॥

विषोल्बणोऽपि कालीयो यदङ्घ्रिमर्दनार्दितः ।
नुत्या परां गतिं लेभे सोऽव्यात्कालीयमर्दनः ॥ ७६२ ॥

जीवनं सर्वगोपानां गोपीनां हृदयोत्सवः ।
कृष्णस्तुष्टोऽस्तु मे सर्वगोपगोपीजनप्रियः ॥ ७६३ ॥

सप्तरात्रातिवर्षोत्थशक्रदर्पहरो हरिः ।
लीलागोवर्धनधरः गा गोपांश्च ररक्ष सः ॥ ७६४ ॥

अत एव गवां त्राणाद्गोविन्दोऽद्रिधरोऽच्युतः ।
श्रुतिगीर्भिः सदा वन्द्यो मामीतिभीतितोऽवतात् ॥ ७६५ ॥

दर्शनात्स्पर्शनाद्वापि गीतिभिरुद्धवप्रदः ।
गवामिन्द्रमखे, वायं प्रीयान्मे गोकुलोत्सवः ॥ ७६६ ॥

अरिष्टमथनः कामोन्मत्तगोपीविमुक्तिदः ।
सद्यःकुवलयापीडघाती चाणूरमर्दनः ॥ १३३ ॥

अरिष्टमथनः कृष्णो दैत्यं तं वृषभाकृतिम् ।
जघान दैत्यविध्वंसदक्षो भूयान्मम प्रियः ॥ ७६७ ॥

स्वीयकामात्यार्तिगोपीमुक्तिदोऽनुग्रहात्स्वकात् ।
भूयान्मे मुक्तिदः कामोन्मत्तगोपीविमुक्तिदः ॥ ७६८ ॥

रङ्गद्वारास्थितं कंसहस्तिराजं स्वलीलया ।
सद्यःकुवलयापीडघाती निघ्नन्प्रियोऽस्तु मे ॥ ७६९ ॥

चाणूरमर्दनो मल्लं चाणूरं मर्दयन्युधि ।
मन्मनोमोहमल्लस्य मूलनशिऽस्तु दत्तधीः ॥ ७७० ॥

कंसारिरुग्रसेनादिराज्यव्यापारितामरः ।
सुधर्माङ्कितभूलोको जरासन्धबलान्तकः ॥ १३४ ॥

कंसारिर्यश्च कंसं तं पितृमातृसुहृद्द्रुहम् ।
साधुब्राह्मणदेवारिं जघान तं स्तुमोऽच्युतम् ॥ ७७१ ॥

युधिष्ठिरोग्रसेनादिराज्ये येनामरर्षभाः ।
तत्तत्सत्कर्मनिष्णाता राज्यभारोद्वहाः कृताः ।
तुष्यात्स उग्रसेनादिराज्यव्यापारितामरः ॥ ७७२ ॥

स्वभक्ताभीष्टसंपूर्त्यै स्वर्गोपकरणान्यपि ।
सुधर्माङ्कितभूलोको भुव्यानिनाय शक्तितः ॥ ७७३ ॥

बहुकृत्वो जरासन्धबलान्तक इवान्तकः ।
संजहार बलं तस्य भीमार्थं न, चकर्त तम् ॥ ७७४ ॥

त्यक्तभग्नजरासन्धो भीमसेनयशःप्रदः ।
सान्दीपनि मृतापत्यदाता कालान्तकादिजित् ॥ १३५ ॥

त्यक्तभग्नजरासन्धो विजितं चापि तं जहौ ॥
स्वभक्तभीमकीर्त्यर्थं कृष्णो भक्तेष्टपूरणः ॥ ७७५ ॥

भीमेन घातयित्वा तं स्वदृष्टयाहतशक्तिकम् ।
चक्रे तं सुयशः पात्रं भीमसेनयशःप्रदः ॥ ७७६ ॥

सान्दीपनिमृतापत्यदाता सद्गुरुदक्षिणाम् ।
अमूल्यामन्यदुर्देयां ददौ सर्वार्थसिद्धिदः ॥ ७७७ ॥

तत्कार्यसिद्ध्यै दुर्धर्षाञ्जित्वा कालान्तकादिजित् ।
प्रत्यूहांस्तोषयामास पुत्रदानेन सद्गुरुम् ॥ ७७८ ॥

समस्तनारकित्राता सर्वभूपतिकोटिजित् ।
रुक्मिणीरमणो रुक्मिशासनो नरकान्तकृत् ॥ १३६ ॥

स्मृत्या कीर्त्या स्वकीयानां गुणानां पापहारिणाम् ।
समस्तनारकित्राता त्रायतां नारकाद्भयात् ॥ ७७९ ॥

समस्तराजचक्रं च संगतं तत्स्वयंवरे ।
रुक्मिण्या जितवान्कृष्णः सर्वभूपतिकोटिजित् ॥ ७८० ॥

भक्तां तामनुरक्तां च रमयामास सुन्दरीम् ।
रुक्मिणीरमणो लक्ष्मीरूपां सौभाग्यशालिनीम् ॥ ७८१ ॥

रुक्मिणीभ्रातरं रुक्मिशासनो द्वेषणं स्वकम् ।
प्रियानुरोधात्तत्याज प्रपन्नं कृतशासनः ॥ ७८२ ॥

नरकासुरमत्युग्रं सद्विपक्षं दिवौकसाम् ।
द्रोग्धारं साधुशमनं जघान नरकान्तकृत् ॥ ७८३ ॥

समस्तसुन्दरीकान्तो मुरारिर्गरुडध्वजः ।
एकाकिजितरुद्रार्कमरुदाद्यखिलेश्वरः ॥ १३८ ॥

नरकेणावरुद्धास्ताः सहस्राणि च षोडश ।
समस्तसुन्दरीकान्तं सुन्दर्यो वव्रिरे वरम् ॥ ७८४ ॥

लुलाव तं सुरारिं च नरकानुचरं मुरम् ।
श्रीकृष्णः स मुरारिर्मामव्यात्कामादिशत्रुतः ॥ ७८५ ॥

अलंकरोति गरुडो वेदरूपो ध्वजं हरेः ।
यस्य सोऽस्त्वन्तकाले मे प्रत्यक्षो गरुडध्वजः ॥ ७८६ ॥

नरकेण हृतेऽदित्यै कुण्डले स्वर्गतो ददत् ।
भार्मार्थितं स्वस्तरुं तमानयंस्तत ईश्वरः ॥
एकाकिजितरुद्रार्कमरुदाद्यखिलेश्वरः ॥
तांस्तान्विघ्नान्विजित्यालंचक्रे तेन भुवं प्रभुः ॥युग्मं। ७८७॥

देवेन्द्रदर्पहा कल्पद्रुमालंकृतभूतलः ।
बाणबाहुसहस्रच्छिन्नन्द्यादिगणकोटिजित् ॥ १३८ ॥

देवेन्द्रदर्पहा तत्र युधि सर्वाभिमानहृत् ।
स्वश्चक्रे स भुवं कल्पद्रुमालंकृतभूतलः ॥ ७८८ । ७८९ ॥

उषाहरणकोपाग्निज्वलद्बाणभुजाटवीम् ।
लुलाव शोणितपुरेऽनिरुद्धस्य पितामहः ।
बाणबाहुसहस्राच्छित् सोऽव्यान्मां सर्वतो भयात् ॥ ७९० ॥

बलिपुत्रसहायांस्तान्नन्द्यादीन्कोटिशो गणान् ।
जिगाय लीलया कृष्णो नन्द्यादिगणकोटिजित् ॥ ७९१ ॥

लीलाजितमहादेवो महादेवैकपूजितः ।
इन्द्रार्थार्जुननिर्भङ्गजयदः पाण्डवैकधृत् ॥ १३९ ॥

तद्भक्तत्राणसम्भ्रान्तमहादेवमपीश्वरः ।
लीलाजितमहादेवो विजिग्ये जिष्णुपालकः ॥ ७९२ ॥

ज्ञात्वा तं देवदेवेशं स्वेष्टदेवमनुत्तरम् ।
सद्भक्त्यानर्च तत्रेशो महादेवैकपूजितम् ॥ ७९३ ॥

इन्द्रांशार्जुनसौहार्दतुष्टस्तस्मै जयं ददौ ।
इन्द्रार्थार्जुननिर्भङ्गजयदोऽर्यपराहतम् ॥ ७९४ ॥

पाण्डवैकधृदेकोऽयं कृष्ण एव कृपानिधिः ।
तेषां त्राता सदापङ्क्चो जयदानसदोद्यतः ॥ ७९५ ॥

**काशिराजशिरश्छेत्ता रुद्रशक्त्येकमर्दनः ।**
**विश्वेश्वरप्रसादाढ्यकाशिराजसुतार्दनः ॥ १४० ॥**

काशिराजशिरश्छेत्ता कृष्णो विजयतां प्रभुः ।
कोऽन्योऽलं दुःसहस्यैतत्कर्तुमस्य हरिं विना ॥ ७९६ ॥

रुद्रोपास्तिजकृत्यां तां रुद्रशक्तिं द्विषद्धराम् ।
काशिराजसुतस्यैष निष्फलीकृतवानप्रभुः ॥
*तत्पुत्रकं चक्रकृतं चक्रे चक्री हरिः प्रभुः ।
सोऽव्यान्मामरिकृत्याभ्यो रुद्रशक्त्येकमर्दनः ॥ ७९७ ॥

तत्पुत्रमस्तकं चक्राच्चकर्त चक्रभृद्धरिः ।
विश्वेश्वरप्रसादाढ्यकाशिराजसुतार्दनः ।
तेन चक्रेण मां रक्ष्यात्संवर्तानलनेमिना ॥ ७९८ ॥

**शम्भुप्रतिज्ञाविध्वंसी काशीनिर्दग्धनायकः ।**
**काशीशगणकोटिघ्नो लोकशिक्षाद्विजार्चकः ॥ १४१ ॥**

विध्वस्ता चाभवच्छम्भोः प्रतिज्ञानेन कर्मणा ।
शम्भुप्रतिज्ञाविध्वंसी पायात्सर्वोत्तमोत्तमः ॥ ७९९ ॥

---

तत्पुत्रमस्तकं चक्रकृत्तं चक्रे हरिः प्रभुः इत्यपि पाठान्तरम्

काशीनायकमत्युग्रं चक्रेण दग्धवान्हरिः ।
तं वन्दे भवदावाग्नि काशीनिर्दग्धनायकम् ।। ८०० ।।

अथ

नवमशतारम्भः ।

काशीशकोटिप्रमथांश्चक्रापास्तांश्चकार यः ।
काशीशगणकोटिघ्नं तं नौमि चक्रिणं हरिम् ।। ८०१ ।।

श्रेष्ठाचारप्रचारार्थं लोकशिक्षार्थमुत्तमः ।
सोऽप्यानर्च द्विजाञ्श्रेष्ठांल्लोकशिक्षाद्विजार्चकः ।। ८०२ ।।

युवतीव्रतपो वश्यः पुराशिववरप्रदः ।
शङ्करैकप्रतिष्ठाधृत्स्वांशशङ्करपूजकः ।। १४२ ।।

युवतीनां तीव्रतपो निघ्नो यासां हरिः पतिः ।
युवतीव्रतपोवश्यस्तासां किं दुर्लभं क्व वा ।। ८०३ ।।

मत्तः श्रेष्ठश्च पूज्यश्च शंभो त्वं भवितासि वै ।
इति यो वरदस्तुष्यात्पुराशिववरप्रदः ।। ८०४ ।।

शंकरैकप्रतिष्ठाधृत् शंकराराधने रतः ।
तस्माद्गृहीतेष्टवरो यस्तस्मै प्रभवे नमः ।। ८०५ ।।

आत्मीयांशस्य शम्भोर्यः स्वांशशंकरपूजकः ।
आराधनासमासक्तः स कृष्णो मयि तुष्यतात् ।। ८०६ ।।

शिवकन्याव्रतपतिः कृष्णरूपशिवारिहा ।।
महालक्ष्मीवपुर्गौरीत्राता वेदलवितृहा ।। १४३ ।।

शिवकन्याः क्वचित्काश्चित्कृष्णाप्त्यै तेपिरे तपः ।
शिवकन्याव्रतपतिस्ताभ्यः स्वात्मार्पकोऽभवत् ॥
कन्यात्वेनावतीर्णा वा द्रुपदस्य शिवैव या ।
स एव भगवान्कृष्णः पालयामास तद्व्रतम् ॥ युग्मं । ८०७ ॥

कृष्णारूपशिवादेव्या अरीन्सर्वाञ्जघान यः ।
स मेऽप्यरीन्सदा वध्यात्कृष्णारूपशिवारिहा ॥ ८०८ ॥

प्राप्तगौरीस्वरूपां तां तत्र लक्ष्मीं श्रियःपतिः ।
महालक्ष्मीवपुर्गौरीत्राता मां त्रायतां हरिः ॥ ८०९ ॥

वेदोच्छेदकरांस्तांस्तांश्छित्त्वा भित्त्वा च तत्स्थितिम् ।
निदधे सुदृढां त्रय्यास्त्राता वेदलवितृहा ॥ ८१० ॥

स्वधाममुचुकुन्दैकनिष्कालयवनेष्टकृत् ।
*यमुनापतिरानीतपरिलीनद्विजात्मजः ॥ १४४ ॥

दत्तस्वतेजसा तेन मुचुकुन्देन भस्मसात् ।
कृत्वा तं कालयवनं स्वेष्टं साधितवान्प्रभुः ॥
स्वधाममुचुकुन्दैकनिष्कालयवनेष्टकृत् ॥ ८११ ॥

यमुनापतिरादित्यतनयां तां तपस्विनीम् ।
मनोरमां रमानाथ उदुवाहानुरागिणीम् ॥ ८१२ ॥

अर्जुनस्य प्रतिज्ञां तां श्रुत्वा तन्मदकृन्तनः ।
परिलीनान्द्विजसुताञ्शक्तोऽपि नानिनाय सः ॥
मयि तुष्यात्सदा नीतपरिलीनद्विजात्मजः ॥ ८१३ ॥

---

*अत्र नञाऽव्यवधानमार्षम्

श्रीदामरङ्कभक्तार्थभूम्यानीतेन्द्रवैभवः ।
दुर्वृत्तशिशुपालादिमुक्तिदो द्वारकेश्वरः ॥ १४५ ॥

भूमावानीतवानिन्द्रवैभवं भक्तितोषितः ।
दरिद्राय सुदाम्ने यः स मे कृष्णः प्रसीदतात् ॥
श्रीदामरङ्कभक्तार्थभूम्यानीतेन्द्रवैभवः ॥ ८१४ ॥

दुर्वृत्तशिशुपालादिमुक्तिदो द्वेषणानपि ।
यो निनाय स्वधामैव स उदारः प्रसीदतु ॥ ८१५ ॥

अशेषप्राणिवपुषि नवद्वारमनोहरे ।
वसन्नपि द्वारकेन्द्रः सोऽव्यान्मां द्वारकेश्वरः ॥ ८१६ ॥

आचण्डालादिकप्राप्यद्वारकानिधिकोटिकृत् ।
अक्रूरोद्धवमुख्यैकभक्तस्वच्छन्दमुक्तिदः ॥ १४६ ॥

तावन्तो निधयस्तत्र द्वारवत्यां कृताः श्रियः ।
पत्या कोटिमिता,यांश्च लेभिरेऽप्यन्त्यजादयः ॥
तत्रत्याः, स हरिः प्रीयान्मयि दासेऽपि माधवः ।
आचण्डालादिकप्राप्यद्वारकानिधिकोटिकृत् ॥ ८१७ ॥

अक्रूरादीन्स्वकान्मुख्यान्भक्तान्योऽतोषयत्प्रभुः ।
स्वच्छन्दमुक्तिदानात्स तुष्टोऽस्तु मम मुक्तये ॥
अक्रूरोद्धवमुख्यैकभक्तस्वच्छन्दमुक्तिदः ॥ ८१८ ॥

प्रवालस्त्रीजलक्रीडामृतवापीकृतार्णवः ।
ब्रह्मास्त्रदग्धगर्भस्थपरीक्षिज्जीवनैककृत् ॥ १४७ ॥

क्षारनीरोऽप्यर्णवो यत्कृपादृष्ट्यामृतीकृतः ।
सोऽबलाबालिकाबालजलक्रीडोत्सवोत्सुकः ॥
श्रीकृष्णोऽस्तु मम प्रेयान्प्रेयः श्रेयःप्रदः प्रभुः ।
सबालस्त्रीजलक्रीडामृतवापीकृतार्णवः ॥ ८१९ ॥

तत्रे गर्भेऽस्त्रविप्लुष्टमार्जुन्यात्मजमीश्वरः ।
ब्रह्मास्त्रदग्धगर्भस्थपरीक्षिज्जीवनैककृत् ॥
स मे कृष्णः सदा भूयाद्भूवाग्निदाहशान्तये ॥ ८२० ॥

परिलीनद्विजसुतानेतार्जुनमदापहः ।
गूढमुद्राकृतिग्रस्तभीष्माद्यखिलकौरवः ॥ १४८ ॥

दर्पं तमर्जुनस्यापनीय तेन समं ययौ ।
महाविष्णवाश्रयं तस्मादानिन्ये तान्द्विजात्मजान् ॥
परिलीनान्स मां कृष्णस्त्रायतां महतो भयात् ।
परिलीनद्विजसुतानेतार्जुनमदापहः ॥ ८२१ । ८२२ ॥

लोकाप्रकाश्यकालाख्यशक्त्या जग्रास यः प्रभुः ।
भीष्मादीनखिलान्पूर्वं भक्तनिघ्नोऽस्तु स श्रिये ।
गूढमुद्राकृतिग्रस्तभीष्माद्यखिलकौरवः ॥ ८२३ ॥

पार्थार्थखण्डिताशेषदिव्यास्त्रः पार्थमोहभित् ॥
गर्भशापच्छलध्वस्तयादवोर्वीभरापहः ॥ १४९ ॥

द्विषत्प्रयुक्तदुर्वार्यदिव्यास्त्राण्यपि यो हरिः ।
अपजह्रे स्वया शक्त्या पार्थार्थं सोऽस्तु मे गतिः ॥
पार्थार्थखण्डिताशेषदिव्यास्त्रोऽस्त्रास्त्रताप्रदः ॥ ८२४ ॥

रणाङ्गणे स्वकानेव विलोक्य मूढचेतनम् ।
पार्थं तं बोधयामास स तुष्यात्पार्थमोहभित् ॥ ८२५ ॥

स्त्रीवेशिसाम्बगर्भोत्थशापो व्याजोऽभवन्ननु ।
यदुवंशविनाशे तु निदानं कृष्ण एव हि ॥
गर्भशापच्छलध्वस्तयादवोर्वीभरापहः ॥ ८२६ ॥

जराव्याधारिगतिदः स्मृतमात्राखिलेष्टदः ।
कामदेवो रतिपतिर्मन्मथः शम्बरान्तकः ॥ १५० ॥

मन्यमानो जरावेधं ब्रह्मर्षिमानगुप्तये ।
द्विषत्कार्यकृतेऽप्यस्मै स्वर्गतिं दत्तवान्प्रभुः ॥
जराव्याधारिगतिदो भूयान्मुक्तिप्रदो मम ॥ ८२७ ॥

अतिशेतेऽतुलः कल्पवृक्षात्स्वर्गेष्टपूरकात् ।
स्मृत्यैवेष्टप्रदः क्वापि स्मृतमात्राखिलेष्टदः ॥ ८२८ ॥

चतुर्व्यूहस्य कृष्णस्य सतत्त्वः सात्त्वतां प्रभोः ।
कामदेवः सर्वकामाधिष्ठाता हृच्छयोऽपि वा ।
काम्यते यः सदा सद्भिस्तस्मै सन्तु नमांसि मे ॥ ८२९ ॥

विषयेष्वनुरक्तिं च रतिमाहुर्मनीषिणः ।
तस्या इष्टो रतिपतिर्भूयान्मम सुखावहः ॥ ८३० ॥

मनो मथ्नाति विश्वेषां देवासुरतपस्विनाम् ।
मन्मथो विषयासक्तिं छिनत्तु हृच्छयो मम ॥ ८३१ ॥

शम्बरं शमनाकारं यो जघानासुरान्तकः ।
अपायात्पङ्कजातपायान्मां घोराच्छम्बरान्तकः ॥ ८३२ ॥

अनङ्गो जितगौरीशो रतिकान्तः सदेप्सितः ।
पुष्पेषुर्विश्वविजयी स्मरः कामेश्वरीप्रियः ॥ १५१ ॥

तिरस्कृत्य तथेशानं हुत्वा तन्नेत्रजेऽनलं ।
पापादिव स्वदेहं योऽनङ्गोऽभूदिव लज्जितः ।
सर्वप्राणिहृदाविष्टो मां पातात्कामशत्रुतः ॥ ८३३ ॥

अनूढयापि गौर्या तं गौरीशं तपसि स्थितम् ।
जिगाय जितगौरीशो योऽस्तु तस्मै नमो नमः ॥ ८३४ ॥

प्रेष्ठः कान्तो रतेर्योऽस्ति रम्यं रागात्मकं वपुः ।
यूनोर्दृढं धारयन्त्या रतिकान्तः स तुष्यतात् ॥ ८३५ ॥

सदेवासुरगन्धर्वैः प्राणिभिरीप्सितः सदा ।
सदेप्सितः स मे कामः सदा भूयाच्छमःप्रदः ॥ ८३६ ॥

अरविन्दादिपुष्पाण्युन्मादनादीनि वा प्रभोः ।
यस्येषवः स पुष्पेषुर्जगज्जेतास्तु शान्तिदः ॥ ८३७ ॥

यो ग्राहयामास वपुर्मार्गमात्मभुवं तथा ।
शिवमिन्द्रं सुधांश्वादीन् भ्रामयामास दीनवत् ॥
सोऽयं मां विश्वविजयी सदाव्यात्कामकिङ्करम् ॥ ८३८ ॥

अनङ्गोऽतः स्मरोऽप्यंषोऽसह्यो विश्वस्य जित्वरः ।
किं नु स्यात्तर्हि विश्वस्य यद्यङ्गी च भवेदयम् ॥ ८३९ ॥

प्रेयसी यस्य कामाधिदेवता सा रतिः, स मे ।
प्रसन्नो भवताद्विष्णुरूपः कामेश्वरीप्रियः ॥ ८४० ॥

उषापतिर्विश्वकेतुर्विश्वतृप्तोऽधिपूरुषः ॥
चतुरात्मा चतुर्वर्णश्चतुर्युगविधायकः ॥ १५२ ॥

व्यूहश्चतुर्थः कृष्णस्यानिरुद्धो भगवान्प्रभुः ।
उषापतिः स मामव्याद्बाणकन्याप्रियः सदा ॥ ८४१ ॥

अशेषज्ञानमूर्तिर्यः प्रज्ञानात्मा परात्परः ।
हिरण्यगर्भरूपः स विश्वकेतुः सदावतु ॥ ८४२ ॥

पूर्णकामो नित्यतृप्तो विश्वतृप्तः स कीर्त्यते ।
कुरुतान्मामपीशोऽसौ पूर्णकामं निरामयम् ॥ ८४३ ॥

समष्टिरूपो जीवानां सर्वेषामधिपूरुषः ।
योऽस्त्यधिष्ठाय तान्सोऽस्तु भुक्तिमुक्तिप्रदो विभुः ॥ ८४४ ॥

युगानुरूपं मूर्तीनां चतुरात्मा स धारकः ।
चतुर्धा भगवान्सोऽयं त्रायतां मामपीश्वरः ॥ ८४५ ॥

चतुर्वर्णश्च शुक्लादिवर्णो धर्मस्थितिप्रदः ।
योऽवतीर्य सदा भीतानार्तान्याति महाभयात् ॥ ८४६ ॥

मर्यादापालकः सोऽयं चतुर्युगविधायकः ।
भगवान्प्रीयतां नित्यं विश्वविश्वधुरन्धरः ॥ ८४७ ॥

**चतुर्भेदैकविश्वात्मा सर्वोत्कृष्टांशकोटिसूः ।**
**आश्रमात्मा पुराणर्षिर्व्यासः शाखासहस्रकृत् ॥ १५३ ॥**

वासुदेवादिभिर्व्यूहैश्चतुर्धाप्यच्युतो विभुः ।
चतुर्युगावतीर्णोऽपि विश्वात्माप्येक एव यः ॥
चतुर्भेदैकविश्वात्मा सोऽस्तु कैवल्यदो मम ॥ ८४८ ॥

कोटिशोंशावतारान्यः सर्वोत्कृष्टान्महौजसः ।
सूते सत्साधुरक्षायै सर्वोत्कृष्टांशकोटिसूः ॥
स प्रभुः प्रभविष्णूनां तारको मेऽस्तु संसृतेः ॥ ८४९ ॥

अनाश्रमत्वेऽपि सदा पूर्णत्वादाप्तकामतः ।
आश्रमात्मैव यो व्यासो विष्णुस्तस्मै नमो नमः ॥ ८५० ॥

आद्यो द्रष्टैष शाखानां त्रय्यास्तस्यास्त्रयीतनुः ।
पुराणर्षिः स मामव्याज्ज्ञानैश्वर्यनिधिर्हरिः ॥ ८५१ ॥

शाखाभेदेन वेदान्यो विस्तारयति निर्भ्रमः ।
विष्णवंशेनावतीर्णोऽसौ व्यासो मां रक्षताद्धरिः ॥ ८५२ ॥

मन्दोपकृतये वेदशाखासहस्रकारकः ।
कठशाखाप्रवीणं मां क्रियाच्छाखासहस्रकृत् ॥ ८५३ ॥

महाभारतनिर्माता कवीन्द्रो बादरायणः ।
*कृष्णद्वैपायनः सर्वपुरुषार्थैकबोधकः ॥ १५४ ॥

महाभारतनिर्माता परालभ्ययशोधरः ।
वेदानूनाखिलयुगेतिहासेऽलं परः कथम् ॥ ८५४ ॥

महान्तः कवयोऽप्यत्र गलद्दर्पाः श्रुतेऽभवन् ।
कवीशशक्तिसारज्ञाः कवीन्द्रं तं स्तवीम्यहम् ॥ ८५५ ॥

आश्रमः शामदो यस्य बदरीषण्डमण्डितः ।
स मुक्तिदां परां शान्तिं दिश्यान्मे बादरायणः ॥ ८५६ ॥

नामतो वर्णतश्चापि कृष्णो यो भगवानृषिः ।
विभूत्या परया युक्तो दैवीं दत्तां स सम्पदम् ॥ ८५७ ॥

यमुनाद्वीपवास्तव्यपराशरात्मसंभवः ।
द्वैपायनो द्विपान्यूनमदमव्याद्भवावटात् ॥ ८५८ ॥

---

*विभक्तिलोप आर्षः ।

भारतेनैव सन् सर्वपुरुषार्थैकबोधकः ।
धर्मादीनखिलान्वर्गान्कृपयाऽबोधयत्प्रभुः ॥ ८५९ ॥

वेदान्तकर्ता ब्रह्मैकव्यञ्जकः पूरुवंशकृत् ।
बुद्धो ध्यानजिताशेषदेवदेवी जगत्प्रियः ॥ १५५ ॥

शरीरात्मविभिन्नत्वैकत्वब्रह्मत्वदर्शकम् ।
वेदान्तकर्ता वेदान्तशास्त्रं शारीरकं व्यधात् ॥ ८६० ॥

वेदान्तवाक्यतात्पर्यनिरूपणपटुः कविः ।
एकं ब्रह्मेति ब्रह्मैकव्यञ्जकोऽवर्णयत्कविः ॥ ८६१ ॥

ययात्यात्मजपूरोर्योऽन्वयं वर्धितवानृषिः ।
उत्पाद्य धृतराष्ट्रादीन्क्षेत्रजान्पूरुवंशकृत् ॥
व्यासर्षये नमस्तस्मै सोऽस्तु मद्वंशवृद्धिकृत् ॥ ८६२ ॥

सर्वज्ञः सर्वगः सर्वः पूज्यो बुद्धोऽवतीर्य यः ।
मोहान्धतमसे मग्नप्राण्युद्धर्ता स्तवीमि तम् ॥ ८६३ ॥

एष ध्यानजिताशेषदेवदेवी जितामरैः ।
सदा दीव्यन्स्वस्वरूपनिदिध्यासनतत्परः ॥ ८६४ ॥

जगत्प्रियस्य तत्त्वं नु किं चित्रं, यज्जगन्मयः ।
प्रभुः सोऽस्ति, हि सर्वस्य स्वः प्रियो वर्तते खलु ॥ ८६५ ॥

निरायुधजगज्जैत्रः श्रीघनो दुष्टमोहनः ।।
दैत्यवेदबहिष्कर्ता वेदार्थश्रुतिगोपकः ॥ १५६ ॥

विना शस्त्रप्रयोगं यो जगज्जेतान्तरस्थितः ।
निरायुधजगज्जैत्रः स्वमहिम्नैव सोऽवतात् ॥ ८६६ ॥

ब्राह्मया लक्ष्म्या घनश्चायं श्रीघनोऽतिपराङ्मुखः ।
विषयेभ्यः पूर्णकामो मामव्यात्पुरुषोत्तमः ॥ ८६७ ॥

ब्राह्मतेजोऽलंकृतोऽन्तः पाषण्डत्वप्रदर्शकः ।
दुष्टान्यो मोहयन्सोऽव्यात्पाषण्डाद्दुष्टमोहनः ॥ ८६८ ॥

दुष्टान्दैत्यान्बहिश्चक्रे वेदेभ्यस्तज्जिघांसया ।
दैत्यवेदबहिष्कर्ता मायिको मायया स्वया ॥ ८६९ ॥

वेदार्थश्रवणैस्त्यक्तांस्तान्कुर्वल्लीलया स्वया ।
चक्रे पराजितान्मायी वेदार्थश्रुतिगोपकः ॥ ८७० ॥

शौद्धोदनिर्नष्टदिष्टसुखदः सर्वसत्पतिः ।
यथायोग्याखिलकृपः सर्वशून्योऽखिलेष्टदः ॥ १५७ ॥

शुद्धोदनस्य यः पुत्रमणिः शौद्धोदनिः स्मृतः ।
स सदौदनशुद्धिं मे क्रियात्परमपावनः ॥ ८७१ ॥

प्राप्तकालमदृष्टस्य फलं प्रापयतीश्वरः ।
नियन्तृत्वान्नष्टदिष्टसुखदः प्रतिभूर्जनम् ॥ ८७२ ॥

सतामप्यसतां पाता दयालुः सदसत्पतिः ।
सर्वाश्रयो न चेत्स स्याज्जगन्नश्येत तत्क्षणात् ॥ ८७३ ॥

यथायोग्याखिलकृपः समदृगपि यः प्रभुः ।
चेद्योग्यता न मन्येत सत्कर्माभाव आपतेत् ॥ ८७४ ॥

सकलं शून्यमेवास्तीत्यङ्गीकृत्य विमोहिताः ।
दुष्टा येन स मामव्यात्सर्वशून्यो जिनेश्वरः ॥ ८७५ ॥

यो भक्तिरक्तमनसां सर्वेषामखिलेष्टदः ।

स प्रसन्नः सदा भूयात्प्रपन्नस्वस्तरुर्हरिः ॥ ८७६ ॥

चतुष्कोटिपृथक्तत्त्वं प्रज्ञापारमितेश्वरः ।
पाषण्डश्रुतिमार्गेशः पाषण्डश्रुतिगोपकः ॥ १५८ ॥

न सन्नासन्नसदसन्न चाप्यनुभयात्मकम् ।
बाधाद्ध्रासाद्विरुद्धैकनिष्ठधर्माऽसमन्वयात् ॥
सतोऽसतो निषेधेऽपि विरोधस्य च दर्शनात् ।
एतत्कोटिचतुष्काच्च भिन्नं तत्त्वं विदुर्जिनाः ॥
चतुष्कोटिपृथक्तत्वं शून्यं तत्पञ्चमं स्तुमः ॥ ८७७ ॥

प्रकृष्टज्ञानसंपत्तेः पारं यातो महेश्वरः ।
दिश्यान्मे ज्ञानसंपत्तिं प्रज्ञापारमितेश्वरः ॥ ८७८ ॥

धर्मानुकारिधर्माणां निरूपणोद्यतागमम् ।
पाषण्डश्रुतिमार्गेशो निर्ममे दुष्टमोहनम् ॥ ८७९ ॥

पाषण्डेभ्यो वेदगुप्तिं कृतवान्भगवान्हरिः ।
क्रियान्मां श्रुतिसारज्ञं *पाषण्डश्रुतिगोपकः ॥ ८८० ॥

कल्की विष्णुयशःपुत्रः कलिकालविलोपकः ।
समस्तम्लेच्छदुष्टघ्नः सर्वशिष्टद्विजातिकृत् ॥ १५९ ॥

दुष्टानमोहयन्मायाद्वारा कल्की जनार्दनः ।
निवृत्तप्रायं धर्मं यः पुनरुज्जीवयन्प्रभुः ॥ ८८१ ॥

अयं विष्णुयशःपुत्रः स्वभक्तेभ्यो यशः प्रदः ।
यशः सूतिः स मे दिश्याद्यशोऽनन्तं सुनिर्मलम् ॥ ८८२ ॥

---

*वेदबाह्यागमसमाश्रया प्रतिषिद्धव्रतचर्या पाषण्डं, तद्योगात् पुरुषोऽपि पाषण्डः ।

कलिकालोद्भवाधर्मं कलिकालविलोपकः ।
यो लुम्पति स विश्वेशो भूयान्मे धर्मवृद्धिकृत् ॥ ८८३ ॥

म्लेच्छान्दुष्टान्समस्तान्यो हन्ति रक्षति सज्जनान् ।
समस्तम्लेच्छदुष्टघ्नो हतान्मे दोषसंहतिम् ॥ ८८४ ॥

करिष्यति द्विजाञ्शिष्टान्वेदाचारवतोऽच्युतः ।
सदाचारं क्रियान्मां च सर्वशिष्टद्विजातिकृत् ॥ ८८५ ॥

सत्यप्रवर्तको देवद्विजदीर्घक्षुधापहः ।
अश्ववारादिरेवन्तः पृथ्वीदुर्गतिनाशनः ॥ १६० ॥

सर्वप्राणिहितार्थं यः सत्यं प्रचारयिष्यति ।
सत्यप्रवर्तको मे स सत्यनिष्ठां प्रयच्छतात् ॥ ८८६ ॥

यज्ञादीनां प्रचाराद्यो देवद्विजानुकम्पया ।
तत्रे क्षुधार्तांस्तान्देवद्विजदीर्घक्षुधापहः ॥ ८८७ ॥

संज्ञायां सूर्यरेतोजः खड्गी धन्वी तनुत्रधृत् ।
अश्वारूढश्च रेवन्तो योऽस्ति तस्यापि कारणम् ॥
अश्वारूढोऽश्ववारादिरेवन्तो भगवान्प्रभुः ।
जगत्त्राता स मे त्राता भूयात्सर्वापदां भयात् ॥ ८८८ ॥

कलिसञ्जातदौर्गत्यभियं भूमौ हरिष्यति ।
दौर्गत्यं हरतान्मेऽपि पृथ्वीदुर्गतिनाशनः ॥ ८८९ ॥

सद्यः क्ष्मानन्तलक्ष्मीकृन्नष्टनिःशेषधर्मधृत् ।
अनन्तस्वर्णयागैकहेमपूर्णाखिलद्विजः ॥ १६१ ॥

सद्यःक्ष्मानन्तलक्ष्मीकृद्भविष्यति सोऽच्युतः ।
भगवदवतारो हि कल्याणाय सतां सदा ॥ ८९० ॥

कलिनष्टं पुनर्धर्मं चतुष्पादं धरिष्यति ।
दिश्यान्मे पूर्णतां धर्मे नष्टनिःशेषधर्मधृत् ॥ ८९१ ॥

अनन्तस्वर्णयागेषु य एकोऽप्यखिलान्द्विजान् ।
*सुवर्णपूर्णान्कर्त्ता स मयि तुष्याद्द्विजप्रियः ॥
अनन्तस्वर्णयागैकहेमपूर्णाखिलद्विजः ॥ ८९२ ॥

असाध्यैकजगच्छास्ता विश्ववन्द्यजयध्वजः ।
आत्मा तत्त्वाधिपः कर्तृश्रेष्ठो विधिरुमापतिः ॥ १६२ ॥

अन्यैरसाध्यं जगतः शासनं यो विधास्यते ।
असाध्यैकजगच्छास्ता स प्रीतोऽस्तु जगत्पतिः ॥ ८९३ ॥

जय एव ध्वजो यस्यालङ्कृतस्य जयश्रिया ।
जगद्वन्द्यः स मे वन्द्यो विश्ववन्द्यजयध्वजः ॥ ८९४ ॥

विभुश्चेता निर्विकारोऽसङ्गोऽणीयानणोरपि ।
नित्यः प्रकृतिदूरस्थ आत्मा तं स्तौमि पूरुषम् ॥ ८९५ ॥

चेतनत्वादिधर्मैः सोऽखिलतत्त्वपतिः स्वराट् ।
तत्त्वाधिपोऽचिन्त्यरूपस्तमस्त्यक्तं करोतु माम् ॥ ८९६ ॥

जगत्कर्तृतया सर्वकारणानामनुत्तरः ।
कर्तृश्रेष्ठो विधाता,यं विश्वकर्ता प्रसीदतात् ॥ ८९७ ॥

सोऽयं ब्रह्मा रजोमूर्त्तिः शेषतल्पस्य मापतेः ।
नाभिजन्मा जगत्सृष्टा विधिर्मे प्रीयतां सदा ॥ ८९८ ॥

*लुट्लकारः

अन्यदुष्करदुःसाध्यतपस्योमाप्रियङ्करम् ।
उमापतिं शिवं स्तौमि सुधासूतिकलाधरम् ॥ ८९९ ॥

भर्तृश्रेष्ठः प्रजेशाग्र्यो मरीचिर्जनकाग्रणीः ।
कश्यपो देवराडिन्द्रः प्रह्लादो दैत्यराट् शशी ॥ १९३ ॥

एकपत्नीव्रतः सोऽर्धनारीश्वरवपुर्धरः ।
भर्तृश्रेष्ठः शिवो मेऽस्तु भर्ता सायुज्यमुक्तिदः ॥ ९०० ॥

—o—

दशमशतारम्भः

प्रजापत्यग्रियो विष्णोरंशोऽद्भुतविभूतिमान् ।
प्रजेशाग्र्यः स विश्वेशः सर्वामव्यात्प्रजां प्रभुः ॥ ९०१ ॥

कश्यपस्य स एवासौ जन्मदाता सनातनः ।
मरीचिर्देवदैत्यानां प्रभवः प्रभुरच्युतः ॥ ९०२ ॥

काश्यप्येव प्रजा सर्वा तस्मात्स जनकाग्रणीः ।
कश्यपोऽदितिपत्नीको विष्णोरपि जनिप्रदः ॥ ९०३ । ९०४ ॥

लेखर्षभो देवराट् स द्युलोकाधिपतिर्हरिः ।
इन्द्रो विभूतिपूर्णोऽयं पूर्णैश्वर्यप्रदोऽस्तु मे ॥ ९०५ । ९०६ ॥

हिरण्यकशिपोः पुत्रः प्रह्लादो दैत्यराट् हरेः ।
भक्तो, यस्मै नृसिंहोऽभूदवतीर्णोऽस्तु स श्रिये ॥ ९०७ । ९०८ ॥

ईड्य ईशानकोटीरकोटिस्थोऽमृतवाहिभिः ।
अंशुभिस्तर्पयन्विश्वं शशी मेऽस्तु स तापहृत् ॥ ९०९ ॥

नक्षत्रेशो रविस्तेजःश्रेष्ठः शुक्रः कवीश्वरः ।
महर्षिराड् भृगुर्विष्णुरादित्येशो बलिस्वराट् ॥ १६४ ॥

नक्षत्रेशोऽशेषताराधतिरेष सुधाकरः ।
सदा भूयाज्जन्ममृत्युभवरोगार्तिनाशनः ॥ ९१० ॥

सर्वरोगार्तिशान्त्यैकप्रवीणो रविरीश्वरः ।
ब्रह्मादिवन्द्यपादाब्जयुग्मो मेऽस्तु प्रसादकृत् ॥ ९११ ॥

बृहद्भान्वादिनिःशेषतेजसां तेज उत्तमम् ।
तेजः श्रेष्ठः स एवास्तु हार्दान्धतमसान्ध्यहृत् ॥ ९१२ ॥
शुभ्रांश्वनूनदीप्त्याढ्यो वर्णनातीतशक्तिभृत् ।
ऐश्वर्यपूर्णान्दैत्येशान्कुर्वञ्शुक्रोऽस्तु भूतये ॥ ९१३ ॥

दैत्येशमुकुटानर्घ्यमणिरक्ताङ्घ्रियुग्मधृत् ।
निःशेषक्रान्तदर्शीशः पायान्मां स कवीश्वरः ॥ ९१४ ॥

वसिष्ठादिमहर्षीणामृषभो यो महर्षिराट् ।
स एवैष भृगुर्विष्णुरूपो ममास्तु मुक्तिदः ॥ ९१५ । ९१६ ॥

भास्वान्वा वामनो वा स विष्णुस्त्रिजगदीश्वरः ।
आदित्येशोऽदितेः पुत्रपराध्योऽस्तु मम प्रियः ॥ ९१७ । ९१८ ॥

बलवत्स्वाप्तसाम्राज्यः सर्वप्राणिबलावहः ।
जराजीर्णायापि मह्यं दिश्याद्बलं बलिस्वराट् ॥ ९१९ ॥

वायुर्वह्निः शुचिश्रेष्ठः शङ्करो रुद्रराट् गुरुः ।
विद्वत्तमः चित्ररथो गन्धर्वाग्र्योऽक्षरोत्तमः ॥ १६५ ॥

सदागतिर्जगत्प्राणो वायुरेवास्ति लोकपः ।
स मां पुनातु भूतात्मा पावकप्रभवोऽमलः ॥ ९२० ॥

हव्यानां देवतुष्ट्यर्थं कव्यानां पितृतृप्तये ।
वोढा वह्निर्द्विजैः सेव्यो मामव्याच्छरणागतम् ॥ ६२१ ॥

दीप्तिमत्स्वथवा शुद्धेष्वग्र्यो यः सर्वतो मलम् ।
दहन्स मे शुचिश्रेष्ठो दहतात्पापसञ्चयम् ॥ ६२२ ॥

यो रुद्राणामसंख्यानां राजा स शंकरः शिवः ।
रुद्रराट् जगदीशो मे देवदेवः प्रसीदतात् ॥ ६२३ । ६२४ ॥

गीष्पतिर्गुरुराचार्यो देवानां सर्वशक्तिमान् ।
विद्वत्तमः सुधीश्रेष्ठो धियं मे दिशताद्वराम् ॥ ६२५ । ६२६ ॥

गानविद्यासु निष्णातदेवानामुत्तमोत्तमः ।
तुष्टो मेऽस्तु चित्ररथो गन्धर्वाग्र्यो विभूतिमान् ॥ ६२७ । ६२८ ॥

अविनश्वरवर्णानामुत्तमः सोऽक्षरोत्तमः ॥ ६२९ ॥

वर्णादिरग्र्या स्त्रीगौरीशक्त्यग्र्या श्रीश्च नारदः ।
देवर्षिराड्पाण्डवाग्र्योऽर्जुनो वादः प्रवादराट् ॥ १६६ ॥

अकार एव वर्णादिः प्रणवेऽप्यग्र्यतां वहन् ॥ ६३० ॥

अग्र्या स्त्री शिववामाङ्गहारिणी जगदम्बिका ।
गौरी सुवर्णवर्णाङ्गी शिवायास्तु सदा मम ॥ ६३१ । ६३२ ॥

अशेषशक्तिचक्रेशी शक्त्यग्र्या श्री परात्परा ।
यदाश्रितं जगत्सर्वं सा प्रीतास्तु सदा मयि ॥ ६३३ । ६३४ ॥

धर्मः साक्षात्कृतो यैश्च तेषां देवत्वमीयुषाम् ।
राजा नारद एवासौ देवर्षिराट् हरिप्रियः ॥ ६३५ । ६३६ ॥

कृष्णप्रेष्ठः शिवोत्कृष्टभक्तः शक्तश्च जिष्णुजः ।
पाण्डवाग्र्योऽर्जुनो दिश्यादर्जुनां कीर्तिमुत्तमाम् ॥ ६३७ । ६३८ ॥

जल्पादिषु वाद एव राजा सोऽयं प्रवादराट् ।
अर्थनिर्णयहेतुत्वात्ते सन्तु मद्रिपोर्गृहे ॥ ६३९ । ६४० ॥

**पवनः पावनेशानो वरुणो यादसाँ पतिः ।**
**गंगा तीर्थोत्तमो द्यूतं छलकाग्र्यं वरौषधम् ॥ १६७ ॥**

पवनः पावनेशानः पावयितृपतिः स्वया ।
विभूत्या, स च मे पङ्कभारमलमपाक्रियात् ॥ ६४१ । ६४२ ॥

जलजन्तुपतिः श्रीमान्वरुणो यादसां पतिः ।
स स्वकाद्दृढपाशान्मां मुञ्चताद्वारुणीपतिः ॥ ६४३ । ६४४ ॥

विष्णुरूपधरा विष्णुपादस्पर्शप्रभाविणी ।
गंगा, तीर्थोत्तमो मेऽस्तु सर्वकिल्विषनाशकृत् ॥ ६४५ । ६४६ ॥

अक्षादिक्रीडनं द्यूतं सदा छलयतां परम् ।
छलकाग्र्यमवज्ञायाः स्थानमव्याद्धरिस्ततः ॥ ६४७ । ६४८ ॥

वरौषधं प्राणिमात्रप्राणधारणकारणम् ॥ ६४९ ॥

**अन्नं सुदर्शनोऽस्त्र्याग्र्यं वज्रं प्रहरणोत्तमम् ।**
**उच्चैःश्रवा वाजिराज ऐरावत इभेश्वरः ॥ १६८ ॥**

अन्नमेवास्ति तन्मेऽस्तु सुलभं कृपया हरेः ॥ ६५० ॥

सुदर्शनश्चक्रवरश्चक्रिणोऽतुलशक्तिधृत् ।
अस्त्राग्र्यमखिलास्त्राणां ब्राह्मादीनां निकृन्तनम् ॥
स मे दन्दग्धु दौर्गत्यमोघं च दुःसहापदाम् ॥ ६५१ । ६५२ ॥

वज्रमैन्द्रममोघं तदद्रीणामपि दारकम् ।
वैरीन्मम विदीर्णाङ्गान्क्रियात्प्रहरणोत्तमम् ॥ ६५३ । ६५४ ॥

उच्चैःश्रवा मघवतो वाजिराजोऽमृतोद्भवः ।
चतुर्दशानां रत्नानां श्रेष्ठ इन्द्रसुखावहः ॥ ६५५ । ६५६ ॥

ऐरावतो जिष्णुशत्रुशातनो मणिरुत्तमः ।
इभेश्वरोऽशेषमत्तगजेन्द्रमददर्पहा ॥ ६५७ । ६५८ ॥

अरुन्धत्येकपत्नीशो ह्यश्वत्थोऽशेषवृक्षराट् ।
अध्यात्मविद्या विद्याग्र्यः प्रणवश्छन्दसां वरः ॥ १६९ ॥

वसिष्ठर्षिद्वितीयासौ पातिव्रत्यधुरन्धरा ।
अरुन्धत्येकपत्नीशो विष्णुरेव प्रभावतः ॥ ६५९ । ६६० ॥

सर्वतीर्थाश्रयो लक्ष्मीप्रियो जितसुरद्रुमः ।
अपाकरोतु दुरितमश्वत्थोऽशेषवृक्षराट् ॥ ६६१ । ६६२ ॥

ब्रह्मविद्याध्यात्मविद्या मुक्तेर्हेतुतयोत्तमा ।
विद्याग्र्यो हरिरेवासौ हार्दं मोहं छिनत्तु मे ॥ ६६३ । ६६४ ॥

प्रणूयते सदा सद्भिस्त्रयीसारोऽक्षरः परः ।
प्रतीको ब्रह्मणोऽव्यान्मां प्रणवश्छन्दसां वरः ॥ ६६५ । ६६६ ॥

मेरुर्गिरिपतिर्मार्गो मासाग्र्यः कालसत्तमः ।
दिनाद्यात्मा पूर्वसिद्धः कपिलः साम वेदराट् ॥ १७० ॥

मेरुर्यो हेमरत्नादिमय एवास्त्यलङ्घितः ।
सूर्यादिभिर्गिरिपतिर्मम भूयात्सुदर्शनः ॥ ६६७ । ६६८ ॥

वर्षाद्यत्वात्समारम्भहेतुत्वात्सर्वकर्मणाम् ।

सदा सत्फलदो मार्गो मासाग्र्यो मेऽस्तु सुश्रिये ।। ९६९ । ९७० ।।

निमेषादिषु वर्षोऽयमुत्तमः कालसत्तमः ।
दिनाद्यात्मा स मे कालो हरिभक्तौ व्यत्येत्वलम् ।। ९७१ । ९७२ ।।

आत्मलाभकृतार्थानां योगिनां ज्ञानिनां वरः ।
पूर्वसिद्धः स कपिलो दह्यान्मेऽनन्तदुष्कृतम् ।। ९७३ । ९७४ ।।

गीतात्मकं पावनाग्र्यं सामैव वेदराट् परम् ।
तदज्ञस्यापि मे भूयाद्धरिभक्तिविवर्धकम् ।। ९७५ । ९७६ ।।

तार्क्ष्यः खगेन्द्र ऋत्वग्र्यो वसन्तः कल्पपादपः ।
दातृश्रेष्ठः कामधेनुरार्तिघ्नाग्र्यः सुहृत्तमः ।। १७१ ।।

त्रयीरूपो माधवाङ्घ्रिपूतपृष्ठो महाबलः ।
तार्क्ष्यः खगेन्द्रः आस्तां मे पुरस्तात्सह विष्णुना ।। ९७७ । ९७८ ।।

सर्वजन्तुमनोऽह्लाददायकः शाखिजीवनः ।
ऋत्वग्र्यः स वसन्तो मे स्वान्तशांति प्रयच्छतात् ।। ९७९ । ९८० ।।

अर्थ्यभीष्टार्थपूर्त्यै यो विख्यातः कल्पपादयः ।
दातृश्रेष्ठो दानशौण्डो भूयान्मे मुक्तिदायकः ।। ९८१ । ९८२ ।।

स्वर्धेनुः सा कामधेनुरार्तिघ्नाग्र्यो हरिः स्वयम् ।
अमृतोद्भूतरत्नानां श्रेष्ठोऽशेषेष्टपूरकः ।। ९८३ । ९८४ ।।

सुहृत्तमश्चिन्तितेष्टानुरूपफलदायकः ।। ९८५ ।।

चिन्तामणिर्गुरुश्रेष्ठो माता हिततमः पिता ।
सिंहो मृगेन्द्रो नागेन्द्रो वासुकिर्नृवरो नृपः ।। १७२ ।।

चिन्तामणिः स मे दिश्याद्विष्णुपादार्चनोत्सवम् ॥ ९८६ ॥

पूज्योत्कृष्टो गुरुश्रेष्ठो माता साक्षाद्धरिः स्वयम् ।
तन्मे मातापि कारुण्याद्विष्णोः सायुज्यमाप्नुयात् ॥ ९८७ । ९८८ ॥

प्रियान्प्राणानपि त्यक्तुं पुत्रार्थे यः समीहते ।
सोऽयं हिततमः पुत्रप्राणदाता पिता हरिः ॥

तादृक् हिततमो मेऽस्तु विष्णुसायुज्यभाक् पिता ॥
अन्येषामपि पितॄणां ममास्तु मुक्तिदो हरिः ॥ ९८९ । ९९० ॥

समस्तवन्यसत्त्वानां श्रेष्ठः सत्त्वबलान्वितः ।
सिंह एव मृगेन्द्रः स्तान्मन्मोहेभेन्द्रदारणः ॥ ९९१ । ९९२ ॥

अनन्ताद्यष्टनागानां प्राग्र्यः श्रीशिवभूषणम् ।
नागेन्द्रो वासुकिरव्यान्मां दष्टं विषयोरगैः ॥ ९९३ । ९९५४ ॥

नृणां श्रेष्ठोऽष्टदिक्पालमूर्तिरेकोऽस्ति शक्तिमान् ।
ऐश्वर्यपूर्णो लक्ष्मीशः प्रीयतां नृवरो नृपः ॥ ९९५ । ९९६ ॥

वर्णेशो ब्राह्मणश्चेतः
करणाग्र्यं नमोनमः ॥ १७३ ॥

चतुर्णामिव वर्णानामीशो ब्राह्मण उत्तमः ।
वर्णेशो ब्राह्मणो मेऽस्तु शिरोधार्यपदाम्बुजः ॥ ९९७ । ९९८ ॥

यदधीना जगत्सत्ता यच्छुद्धया मुक्तिराप्यते ।
चेतसे करणाग्र्याय तस्मा अस्तु नमो नमः ॥ ९९९ । १००० ॥

हरि ओं तत्सत् ।

श्रीश्रीनगरविघ्नेशमन्दिरासन्नवासिना ।
शास्त्रिणा नाथरामेण कल्लोपाह्वेन धीमता ॥ १ ॥

विनिर्मितो ह्ययं ग्रन्थो भक्तिनिर्भरचेतसा ।
मह्यं समर्पितो योऽसौ नामोल्लासाभिधानकः ॥ २ ॥

ग्रहेन्दुव्योमयुग्माब्दे (२०१९) वैक्रमे श्रावणे मया ।
दर्शे तिष्ये कुजे सोऽसौ लक्ष्मणेन प्रकाशितः ॥ ३ ॥

पाद्मे या परिगुम्फिता भगवतो विष्णोः सहस्राह्वयी
तन्नामामृतपानपूतमनसा गीतो ह्ययं सूरिणा ।
"नामोल्लास"-उदारवैभवददो हर्त्ता समस्तापदां
गाढध्वान्तविनाशनाय जनतास्वान्ते सदा राजताम् ॥ ४ ॥

अनल्पपुण्यप्रभवा कृतिरेषा सतः सताम् ।
समादधात्यनुपमां हृदि काञ्चिच्चमत्कृतिम् ॥ ५ ॥

समाप्तोऽयं श्रीविष्णुसहस्रनामोल्लासः

इति शिवम्



